


**CHANDAMAMA PUBLICATIONS**

188, N. S. K. SALAI, VADAPALANI, MADRAS - 600 026, INDIA.

Phone: 423423, 421778 Grams: "CHANDAMAMA" Telex: 041-347


प्रियमित्राणि अभिमानिनः च,

केभ्यश्चित् मासेभ्यः मम मनः तुदन्तीः काश्चन समस्याः अत्र भवतां सम्मुखम् उपस्थापयितुम् इच्छामि। भवन्तः चन्दमामां सर्वदा आदरेण प्रेम्णा च दृष्टवन्तः। पत्रिकायाः प्रकाशकः सन् किम् अहं भवतां सद्भावस्य अनुगुणं व्यवहृतवान्? सदापि अस्माकम् अयं प्रामाणिकः प्रयत्नः आसीत् यत् कथानां द्वारा, सरलशैल्या निरूपितानाम् अत्युपयुक्तानां सामान्यज्ञानविषयाणां द्वारा च साहित्यिक-सांस्कृतिकपरम्परायाः सौन्दर्यं परिचाय्य, तन्मुखेन बालेषु हितकरी पठनप्रवृत्तिः उद्बोधनीया इति। एतदनुगुणं पत्रिकायाः गुणात्मकता अस्माभिः प्रयत्नतः रक्षिता चापि। किन्तु पत्रिकायाम् उपयुज्यमानस्य कागदस्य गुणस्तरं सदापि रक्षितुं वयं न शक्ताः। एषः अंशः भवद्भिः अपि लक्षितः स्यात् एव। अस्माकं राष्ट्रियजीवने प्रामाणिकतायाः देशभक्तेः च मूल्यं कियदुन्नतम् अस्ति इति न जानीमो वयं, परन्तु कागदस्य मूल्यं तु एषु दिनेषु आकाशं स्पृशत् अस्ति।

अहम् न्यूनमूल्यकं सुलभलभ्यं, किन्तु अनाकर्षकं कागदम् उपयुज्य भवत्सु निराशां जनितवान् किम्? पत्रिकायाः मूल्यवर्धनं निवारयितुम् एवं करणम् अनिवार्यम् आसीत्। बहुभिः प्रकाशकैः कथं मूल्यवर्धनं कृतम् इति भवद्भिः अवलोकितं स्यात् एव। अस्माभिरपि प्रकाशमानं कागदम् (Glazed paper) उपयोक्तव्यं चेत् मूल्यं द्विगुणितं वर्धनीयं भवेत्। परन्तु, अहं विश्वसिमि, बाह्यसौन्दर्यस्य अपेक्षया अपि अन्तःसत्त्वं प्रधानम् इति। अतः एव वयम् अन्तःसत्त्वस्य रक्षणे सदापि बद्धादराः। एतादृशं मम चिन्तनं भवताम् अपि अनुमतम् एव इति दृढीयान् मे विश्वासः।

इति भवदीयः

B. Viswanatha Reddi

प्रकाशकः

जिज्ञासा –

# कर्तरि क्तप्रत्ययः

शिष्यः- श्रीमन्! अहम् अद्य कस्मिंश्चित् पुस्तके कञ्चन श्लोकं पठन् आसम्। श्लोकस्य विवरणसन्दर्भे 'गतः– अत्र कर्तरि क्तप्रत्ययः' इति लिखितम् आसीत्। एतस्य वाक्यस्य तात्पर्यं मया सम्यक् न गृहीतम्।

आचार्यः- कर्तरि क्तः इत्यस्य तात्पर्यं ज्ञातव्यं वा भवता? ततः पूर्वं मम प्रश्नः– भवान् कर्मणिप्रयोगं भावेप्रयोगं च जानाति वा? इति।

शि - जानामि एव। 'मया पुस्तकं पठ्यते' इति कर्मणिप्रयोगस्य उदाहरणम्। 'पुष्पेण पत्यते' इति भावेप्रयोगस्य उदाहरणम्। कर्मणिप्रयोगे क्रियापदं सकर्मकं भवति, भावेप्रयोगे च क्रियापदम् अकर्मकं भवति इति अनयोः भेदः।

आ - भवता उक्तयोः वाक्ययोः भूतकालरूपं वदतु।

शि - मया पुस्तकम् अपठ्यत – कर्मणि भूतकाले
पुष्पेण अपत्यत – भावे भूतकाले।

आ - 'अपठ्यत' इत्यस्य स्थाने 'पठितम्' इति, 'अपत्यत' इत्यस्य स्थाने 'पतितम्' इति च प्रयोगः कर्तुं शक्यते।

शि - आं, जानामि। 'रामेण पुस्तकं पठितम्' 'पुष्पेण पतितम्' इत्यादयः प्रयोगाः एव अधिकतया क्रियन्ते अस्माभिः।

आ - पठितः/पठिता/पठितम्, पतितम् इत्यादीनि रूपाणि क्तप्रत्ययान्तानि। एवं तर्हि.....

शि - कर्मणि भावे च क्तप्रत्ययः प्रयोक्तुं शक्यः इति सिद्धम्।

आ - आम्। 'रामः गतः' 'वृष्टिः आगता' 'यानं गतम्' इत्यादयः प्रयोगाः श्रुताः वा?

शि - अवश्यं श्रुताः। तथैव प्रयुक्ताः अपि।

आ - गतादिषु अपि प्रत्ययः 'क्तः' एव। किन्तु रामः गतः इतिवत् रामः पठितः, रामः लिखितः इत्यादयः प्रयोगाः न करणयाः।

शि - कथम् एतत्? तात्पर्यं मया सम्यक् न गृहीतम्। कर्मणि भावे च क्तप्रत्ययः भवति इति ज्ञातम्। गतः/गता/गतम् इत्यादिषु अपि क्तप्रत्ययः प्रयुज्यते इत्यपि ज्ञातम्।

आ - तिष्ठतु तावत्, विस्तरेण कथयामि। अधस्तनानि चत्वारि वाक्यानि परिशीलयतु–

I. रामः पुस्तकम् अपठत् — सकर्मककर्तरिप्रयोगः

II. रामेण पुस्तकम् अपठ्यत — कर्मणिप्रयोगः

III. पुष्पम् अपतत् — अकर्मककर्तरिप्रयोगः

IV. पुष्पेण अपत्यत — भावेप्रयोगः

कर्मणिप्रयोगे (II), भावेप्रयोगे (III), अकर्मककर्तरिप्रयोगे (IV) च सर्वत्र क्तप्रत्ययः कर्तुं शक्यः। किन्तु सकर्मककर्तरिप्रयोगे (I) सर्वत्र क्तप्रत्ययः न भवति। यदि धातुः गत्यर्थकः* तर्हि एव क्तप्रत्ययः, इतरत्र न। यथा– रामः शालां गतः।

रामः पुस्तकं पठितः इति तु न प्रयोक्तव्यम्। यतः पठ्धातुः सकर्मकः, गत्यर्थकः न। अतः तस्य कर्तरि क्तप्रत्ययः न भवति।

शि - एवं तर्हि सकर्मककर्तरिप्रयोगे क्तप्रत्यययोजनसन्दर्भे अस्माभिः जागरूकैः भवितव्यम्। गत्यर्थकत्वम् अस्ति चेदेव क्तप्रत्ययः तत्र करणीयः, अन्यथा न।

आ - आम्। एतावदेव तात्पर्यम्। वयं कर्तरि क्तवतुप्रत्ययम् अपि उपयुञ्ज्महे क्रियापदस्थले। अतः एवं रूपाणि–

* सकर्मककर्तरिप्रयोगे– (i) गत्यर्थकत्वे – अगच्छत्/गतवान्/गतः।
  (ii) गत्यर्थकाभावे – अपठत्/पठितवान्।
* अकर्मककर्तरिप्रयोगे – अपतत्/पतितवान्/पतितम्।
* कर्मणिप्रयोगे – अपठ्यत/पठितम्।
* भावेप्रयोगे – अपत्यत/पतितम्।

शि - एतया चर्चया बहुधा उपकृतोऽस्मि श्रीमन्।

आ - अग्रिमे मेलने एतद्विषये कांश्चन प्रश्नान् पृच्छामि। अस्तु वा?

शि - अवश्यं पृच्छतु। अहं तदर्थं सिद्धः।

---

* गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च – ३-४-७२




# चन्दमामा

संस्थापकः– 'चक्रपाणिः'　　सञ्चालकः– 'नागिरेड्डी'

'संशोधनं नाम उपलभ्यानाम् अंशानाम् आधारेण आदृतः कश्चन सम्भाव्यः निर्णयः। अन्यानि प्रमाणानि लब्धानि चेत् संशोधकेन स्वविचारे परिवर्तनम् आनेतव्यम्। एषः संशोधनधर्मः। यतः संशोधकस्य अपेक्षया अपि सत्यं श्रेष्ठम्' इति केनचित् विदुषा संशोधनविषये (Research) उक्तम्।

संस्कृतविषये अपि प्रायः एषा नीतिः अन्वेति। 'शुद्धया भाषया वक्तुं शक्नोमि' इति सधैर्यं वक्तुम् अर्हाः अङ्गुलिगणनीयाः भवेयुः। प्राप्तपदवीकाः अपि शुद्धताविषये इदमित्थम् इति बहुत्र वक्तुं न शक्नुवन्ति। किमुत पामराणां कथा?

इतरासु भाषासु प्रायः शुद्धतां (पदेषु, वाक्यरचनायाम् इत्यादिषु) व्यवहारः ज्ञापयति। शास्त्रं तु गभीरतां कल्पयति। किन्तु संस्कृते तु न तथा। बहोः कालतः संस्कृतं व्यवहारपथे न आसीत् इत्यतः व्यवहारः इदानीं शुद्धतां ज्ञापयितुम् असमर्था। शास्त्रेषु तु शुद्धतासम्बन्धे सहस्रशः अंशाः भवन्ति। किं तान् सर्वोऽपि पठितुं शक्नुयात्? ये संस्कृतं सम्यक् जानन्ति ते शुद्धताविषये अपि चिन्तयन्तः यदि व्यवहरन्ति तर्हि इतरे सामान्याः तान् अनुसरन्ति। तदा कालान्तरे संस्कृतक्षेत्रे अपि व्यवहारः शुद्धतां ज्ञापयितुं शक्नुयात्।

सम्पुटः–६　　जुलै–१९८९　　सञ्चिका–४

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००



# रसवार्ता:



## कोपः जनयति अनारोग्यम्

ड्यूक्विश्वविद्यालये हृदयवेदनासम्बन्धे संशोधनं कृतम्। तस्मात् ज्ञायते यत् प्रतीकारं साधयितुम् इच्छन्तः, सदा संशयशीलाः, कोपशीलाः च हृदयवेदनां प्राप्य अकालमरणं प्राप्स्यन्ति इति। अतः हृदयस्य सुस्थितेः रक्षणार्थं सर्वदा शान्तरीत्या व्यवहरणीयम्।

## एफेल्भवनशिखरस्य शताब्दाचरणम्

एफेल्भवनस्य शताब्दाचरणाङ्गतया डिसेम्बर् ३१तः आरभ्य समग्रे जगति उन्नत्या प्रसिद्धानि भवनानि दीपैः विशेषतः अलङ्क्रियन्ते। न्यूयार्क् एम्पायर् स्टेट् बिल्डिंग्, टोकियो टवर्, केनडास्थं टोरेण्टो, कालगरी टवर्स्, लण्डन्स्थं ब्रिटिष् टलकम् टवर्, पश्चिमजर्मनीदेशे म्युनिच्नगरस्थम् ओलम्पिक् टवर् इत्यादिनि तादृशम् अलङ्कारसौभाग्यं प्राप्स्यन्ति। ३२० द्वादशाङ्गुलोन्नतं एफेल्भवनशिखरं १८८९ तमे वत्सरे गस्टाव् एफेल् निर्मितवान् आसीत्। तस्य जन्मदिनं मार्च्-३१।





## लघुविमानम्

प्रतिघण्टं १३० कि.मी. दूरं गन्तुं समर्थं ४७ कि.ग्रां भारयुतं लघुविमानं सोवियत्देशीयः विज्ञानी विक्टर् दिमिट्रीयल् निर्मितवान् अस्ति। एतस्य लघुविमानस्य निमित्तं प्रतिघण्टं लीटर्त्रयमितं अग्नितैलम् आवश्यकं भवति।

## चितातः उत्थिता वृद्धा महिला!

भावनगरसमीपस्थे मलंकी ग्रामे मृतां मत्वा काञ्चित् शतवर्षीयां वृद्धां चिताम् आरोपितवन्तः। किन्तु किञ्चित्कालानन्तरं चितातः उत्थाय गृहम् आगता सा बन्धुमित्राणि आश्चर्यचकितानि अकरोत्। तां दृष्ट्वा यद्यपि बान्धवाः क्षणकालं भीताः, किन्तु ते अनन्तरं ज्ञातवन्तः यत् मूर्च्छां गतां मृतां मत्वा चिताम् आरोपितवन्तः वयम् इति। एतां घटनां स्मृत्वा ते हसितवन्तः।



# मूर्खः ग्रामाधिकारी

ग्रामाधिकारित्वं वृषभेन्द्रेण वंशापारम्पर्येण प्राप्तम् आसीत्। किन्तु सः नितरां मूर्खः। कदाचित् कश्चन कृषिकः तस्य समीपम् आगत्य उक्तवान्– "श्रीमन्! कश्चन वृषभः मम क्षेत्रं प्रविश्य सस्यानि खादन् अस्ति। कथम् अपि सः ततः निष्कासनीयः। कृपया साहाय्यं करोतु" इति।

तदा वृषभेन्द्रः उक्तवान्– "तस्य निष्कासनार्थम् अहं कर्मकरं प्रेषयामि" इति।

"तेन प्रेरितः वृषभः क्षेत्रे सर्वत्र सञ्चरन् सर्वाणि सस्यानि नाशयेत्" इति आतङ्कं प्रकटितवान् कृषिकः।

"तर्हि कर्मकरत्रयं प्रेषयिष्यामि। ते वृषभं बलात् उन्नीय क्षेत्रतः बहिः आनेष्यन्ति" इति उक्तवान् ग्रामाधिकारी।

ग्रामाधिकारिणः एतत् मूर्खतायुक्तं वचनं श्रुत्वा तम् अस्पष्टैः वचनैः निन्दन् ततः निर्गतवान् कृषिकः।

पुनः कदाचित् ग्रामीणाः केचन उपहासं कर्तुम् इच्छन्तः ग्रामाधिकारिणः समीपम् आगत्य उक्तवन्तः– "महाशय! ग्रामीणानां सर्वेषाम् आशयः अस्ति यत् ग्रामीणः देवालयः द्वादशाङ्गुलत्रयमितं पार्श्वे नोदितः चेत् वरं स्यात् इति" इति।

"एतत् तु सुलभसाध्यम्" इति वदन् ग्रामाधिकारी शतं जनान् आहूतवान्। मन्दिरस्य नोदनार्थम् आदिष्टवान् च। मन्दिरस्य पृष्ठतः चिह्नरूपेण द्वादशाङ्गुलत्रयमिते दूरे स्वकीयम् उष्णीषं स्थापितवान् चापि।

जनाः मन्दिरनोदनस्य अभिनयं चिरकालं कृत्वा अन्ते ग्रामाधिकारिणम् उक्तवन्तः– "श्रीमन्! मन्दिरनोदनं पर्याप्तं वा इति पश्यतु" इति।

ग्रामाधिकारी मन्दिरस्य पृष्ठतः गतवान्। तत्र तदीयम् उष्णीषं न दृश्यते स्म। यतः तत् केनचित् चोरितम् आसीत्। तत् चोरितम् इति अजानन् मूर्खः ग्रामाधिकारी धावन् जनानां समीपम् आगत्य उक्तवान्– "अलं नोदनेन। भवन्तः अधिकं नोदितवन्तः इति भाति। मम उष्णीषं मन्दिरस्य अधः गतम् अभवत्" इति।





# अपक्वः पलाण्डुः

कवेरपुरे रामः भीमः इति सहोदरौ निवसतः। तौ पित्रार्जितं गृहं द्विधा विभज्य एकैकस्मिन् भागे एकैकः निवसतः। तयोः स्वभावे महान् भेदः दृश्यते। रामः सरलस्वभावयुतः परिशुद्धहृदयः। किन्तु भीमः स्वभावेन कठिनः कोपशीलः च।

एकदा कश्चन संन्यासी भीमस्य गृहस्य पुरतः स्थित्वा प्रार्थितवान्– "भोजनं ददातु" इति।

एतत् श्रुत्वा कुपितः भीमः– "किमपि न दीयते। निर्गच्छतु भोः" इति उक्त्वा वेगेन द्वारपिधानं कृतवान्। संन्यासी रामस्य गृहं अपि गत्वा भिक्षां प्रार्थितवान्। रामः तम् आदरेण अन्तः आहूय भोजनं परिवेषितवान्। एतेन सन्तुष्टः संन्यासी रामम् उक्तवान्– "भवतः सत्कारेण अहं सन्तुष्टः अस्मि। भवतः अपेक्षा काऽपि अस्ति चेत् वदतु। पूरयिष्यामि" इति।

"मम अनुजः भीमः वैभवेन जीवति। तस्य यावत् ऐश्वर्यं तावत् ऐश्वर्यं ममापि आवश्यकम्। तथा ऐश्वर्यदानं शक्यं वा?" इति पृष्टवान् रामः।

"भवतः गृहे विद्यमानं कमपि शाकम् आनयतु" इति सूचितवान् संन्यासी।

रामः अन्तः गत्वा अन्वेषणं कृतवान्। गृहे चत्वारः पलाण्डवः केवलम् आसन्। तान् एव आनीय दत्तवान् सः।

"एतान् चतुरः अपि जले स्थापयित्वा पक्वान् करोतु। पक्वान् भवान् खादतु। अपक्वं पलाण्डुं मम हस्ते स्थापयतु" इति उक्तवान् संन्यासी।

संन्यासिनः सूचनानुसारं पलाण्डुं जलपात्रे संस्थाप्य चुल्लेः उपरि पाकार्थं स्थापितवान् रामः। त्रयः पलाण्डवः पक्वाः। एकः तु न



केन अपहृतं स्यात् इति चिन्तयन् स्थितवान् रामः।

तदा संन्यासी रामम् उक्तवान्– "चिन्ता मास्तु। स च पलाण्डुः केनापि गीर्णः स्यात्। एतेन भवतः काऽपि हानिः नास्ति। पलाण्डुना यद्यत् करणीयं तत्सर्वं तेन करणीयं भविष्यति। तादृशस्य सामर्थ्यबाहुल्या अपेक्षा भवता न प्रकटनीया। अत्याशा अपि न करणीया। यदा किमपि अपेक्षितं भवति तदा 'अये पलाण्डो' इति आहूय अपेक्षां प्रकटयतु। येन पलाण्डुः गीर्णः सः तदा आगत्य भवतः अपेक्षां पूरयिष्यति। अहम् इदानीम् इतः गत्वा षण्मासानन्तरम् आगमिष्यामि। शुभं भवतु" इति।

नमस्कृतवन्तं रामम् आशिषा अनुगृह्य ततः निर्गतवान् संन्यासी। अनन्तरं रामः– "अये पलाण्डो! मम शयनार्थम् उत्तमः तल्पः आवश्यकः" इति उच्चस्वरेण उक्तवान्। अल्पे एव काले भीमः रामस्य प्रकोष्ठे मञ्चम् आनीय स्थापयित्वा तदुपरि तल्पं प्रसार्य उपधानम् आच्छादकं च स्थापयित्वा निर्गतवान्।

'पलाण्डुं भीमः एव गीर्णवान्' इति ज्ञातवतः रामस्य आश्चर्यं सन्तोषः च। यतः भीमः रामं वञ्चयन् पित्रार्जितायां सम्पत्तौ अधिकं स्वीकृतवान् आसीत्। पूर्वं रामस्य मञ्चः भीमेन अल्पेन मूल्येन क्रीतः आसीत्। स च मञ्चः इदानीं रामेण विनायासं प्राप्तः

पक्वः। पक्वान् खादित्वा अपक्वं संन्यासिनः पुरतः स्थापितवान् रामः।

"अद्य रात्रौ अहं भवतः गृहे तिष्ठन् अपक्वे एतस्मिन् पलाण्डौ मन्त्रशक्तिं योजयिष्यामि। श्वः आरभ्य एषः पलाण्डुः भवता प्रार्थितं सर्वं दास्यति" इति उक्तवान् संन्यासी।

रामः संन्यासिनः शयनार्थं व्यवस्थां कृतवान्। रात्रौ संन्यासी पलाण्डुम् अभिमन्त्र्य रामाय दत्तवान्।

एतत्सर्वं जागरूकतया परिशीलयन् आसीत् भीमः सः गुप्तरूपेण रामगृहं प्रविश्य पलाण्डु चोरितवान्। स्वगृहं गत्वा तं पलाण्डुं खादित्वा सुखेन सुप्तवान् च।

अनन्तरदिने रामः अपक्वं पलाण्डुं सर्वत्र अन्विष्टवान्। किन्तु स च कुत्रापि न दृष्टः।

अस्ति।

"अये पलाण्डो! मह्यं शतं रूप्यकाणि आवश्यकानि" इति अपेक्षां प्रकटितवान् रामः।

अल्पे एव काले भीमः शतरूप्यकयुक्तं स्यूतं रामाय दत्त्वा गतवान्। पूर्वं कदाचित् रामेण रक्षणार्थं शतं रूप्यकाणि दत्तानि आसन्। 'न दत्तानि एव भवता' इति वदन् भीमः वञ्चितवान् आसीत्। तच्च धनम् इदानीं प्राप्तं रामेण।

एवं पलाण्डोः अनुग्रहतः रामस्य जीवनं विना श्रमं सुखेन यापितं भवति। भीमः एव रामाय उत्तमं भोजनम् आनीय ददाति। रामस्य गृहस्य स्वच्छतादिकार्यम् अपि सः एव करोति। रामस्य गृहार्थम् अपेक्षितानि वस्तूनि सर्वाणि भीमः एव आनयति।

भीमेन इदानीं शरीरपरिश्रमः अधिकतया करणीयः इति तु सत्यम् एव। तथापि तदीयं जीवनं दुस्सहम् जातम् इति न। अग्रजस्य सेवां कुर्वन्तं भीमं जनाः गौरवेण पश्यन्ति स्म। उदारबुद्ध्या केचन धनसाहाय्यम् अपि कुर्वन्ति स्म। परिश्रमानुगुणं भीमः धनं प्राप्नोति स्म एव।

एवम् एव षट् मासाः अतीताः। संन्यासी पुनः आगत्य रामं दृष्टवान्। रामः तस्य पादयोः पतित्वा उक्तवान्– "श्रीमन्! भवदनुग्रहेण अहम् इदानीं सुखेन अस्मि" इति। राममुखात् प्रवृत्तं समग्रं श्रुत्वा संन्यासी भीमस्य गृहं गत्वा भीमं स्वसमीपम् आहूतवान्।





भीमः धावन् आगत्य संन्यासिनः पादयोः पतित्वा प्रार्थितवान्– "श्रीमन्! मया इदानीं विवेकः प्राप्तः अस्ति। ईर्ष्यायाः प्रतिफलं प्राप्तं मया। मां क्षाम्यतु। एतस्मात् कष्टतः विमोचनं कथम् इति माम् उपदिशतु" इति।

तदा संन्यासी मन्दहासपूर्वकम् उक्तवान्– "भोः, पलाण्डुः शिष्टं रक्षति, दुष्टं दण्डयति च। 'अहम् एतावता तृप्तः अस्मि, पलाण्डो! जीर्णीभवतु' इति भवतः अग्रजः यदा अपक्वपलाण्डुम् उद्दिश्य वदति तदा पलाण्डुः भवति जीर्णः भवति। अतः तथा प्रार्थनीयम् इति सहोदरं सूचयतु। तथा प्रार्थनेन एव भवतोः उभयोः अपि हितं सिध्यति" इति।

"मया पूर्वं सः वञ्चितः आसीत्। अतः मन्निमित्तं सः पलाण्डुं तथा प्रार्थयेत् वा न वा" इति सन्देहं प्रकटितवान् भीमः।

"यः अत्याशया व्यवहरति सः तदुचितं दण्डनं प्राप्नोति एव। एषः विषयः मया तम् उद्दिश्य पूर्वम् एव उक्तः। पश्चात्तापदग्धः सदापि क्षन्तव्यः। एषा लोकनीतिः। भवतः अग्रजः भवतः हितार्थं पलाण्डुं प्रार्थयितुं न इच्छति चेत् स च पलाण्डुः भवच्छरीरतः निर्गत्य तस्य उदरं प्रविशति। तदा भवतः अपेक्षाः तेन पूरणीयाः भवन्ति। तत्समये भवता अत्याशा प्रकटिता चेत् स च पलाण्डुः पुनः भवतः शरीरं प्रविशति। तदा भवता स्वसमस्यायाः परिहारः स्वयं चिन्तनीयः भवेत्" इति उक्त्वा संन्यासी ततः निर्गतवान्।

भीमः अग्रजगृहं गत्वा संन्यासिनः वचनानि श्रावयित्वा–"मम निमित्तं पलाण्डोः जीर्णीभवनं प्रार्थयतु भोः" इति उक्तवान्।

"जीवने मया इतोऽपि पूर्णतृप्तिः न अनुभूता। कालान्तरे अहं तथा प्रार्थयिष्यामि। तावत् स च पलाण्डुः भवतः उदरे एव तिष्ठतु" इति उक्तवान् रामः।

"अत्याशायाः अनिष्टं फलम् इति संन्यासिना स्पष्टम् उक्तम्। अतः पलाण्डुं कृपया प्रार्थयतु– 'पलाण्डो! जीर्णीभवतु' इति। एतेन एव आवयोः हितं भविष्यति" इति पुनः उक्तवान् भीमः।

रामः स्वभावतः सज्जनः चेदपि विना

श्रमेण प्राप्यमाणं सुखं सुलभतया त्यक्तुं न इच्छति। अतः सः संन्यासिनः जागरूकतावचनम् उपेक्ष्य अपेक्षां प्रकटितवान्— "अये पलाण्डो! मह्यं शतं रूप्यकाणि आवश्यकानि" इति।

अनन्तरक्षणे भीमस्य मुखात् निर्गतः पलाण्डुः रामस्य मुखं प्रविश्य उदरं प्राप्नोत्। एतया घटनया रामः दिग्भ्रान्तः। सः भीत्या कम्पमानः— "एवं भवेत् इति मया न चिन्तितम् आसीत्। अत्याशाग्रस्तः अहम् अविवेकेन व्यवहृतवान्। मां क्षाम्यतु। कथञ्चित् रक्षतु च" इति अनुजं प्रार्थितवान्।

"अग्रज! अहं रक्षामि भवन्तम्। अहं पूर्वतनः भीमः न। मया विवेकः प्राप्तः अस्ति। परिश्रमेण जीवनम् एव सुखकरम्। सौजन्यपूर्णेन व्यवहारेण एव तृप्तिः। एतत् उभयं मया अनुभवात् ज्ञातम्। इतः परम् आवाम् परस्परप्रीत्या जीवाम" इति उक्त्वा भीमः पलाण्डुम् उद्दिश्य उक्तवान्— "अये पलाण्डो! इतः परं भवत्तः मम कापि अपेक्षा नास्ति। जीर्णीभवतु भवान्" इति।

भीमे जातं परिवर्तनं दृष्ट्वा आश्चर्यम् अनुभवन् उक्तवान् रामः— "भवान् मद्द्वारा सर्वं कारयिष्यति इति मम भीतिः आसीत्। किन्तु भवतः स्वभावे महत् परिवर्तनम् आगतम्। अहम् एव अत्याशया व्यवहृतवान्। मां क्षाम्यतु। भवत्तः स्वीकृतानि सर्वाणि वस्तूनि भवते प्रत्यर्पयामि" इति।

"प्रत्यर्पणीयं किमपि नास्ति अग्रज! परस्परप्रीत्या निवासं कर्तुम् इच्छतोः आवयोः मध्ये कः भेदः? तानि भवतः समीपे एव तिष्ठन्तु। परस्परसहकारेण प्रगतिं साधयेम वयम्" इति उक्तवान् भीमः।

अनन्तरं तौ परस्परप्रीत्या व्यवहरन्तौ सहकारभावेन कार्यं कुर्वन्तौ अल्पे एव काले उन्नतिं प्राप्तवन्तौ। "रामभीमौ इव वयम् अपि प्रीत्या सहकारेण च व्यवहरामः चेत् उन्नतिं प्राप्तुं शक्नुमः" इति आलोचितवन्तः कवेरपुरीयाः।





# वाणिज्यबुद्धिः

कस्मिंश्चित् ग्रामे दयारामः नाम कृषिकः आसीत्। तस्य त्रयः पुत्राः। ते महाबुद्धिमन्तः एव। किन्तु तेषां न्यूनता नाम ते कृषिकार्ये पितुः साहाय्यं न कुर्वन्ति। सदाऽपि वाणिज्यविषये चर्चां कुर्वन्तः समयं यापयन्ति।

मम पुत्राणाम् एषा प्रवृत्तिः दूरीकरणीया इति निश्चितवान् दयारामः।

दयारामस्य त्रीणि आत्मीयमित्राणि आसन्। तेषु एकः कविः, अपरः राजकीयपुरुषः, अन्यः धर्मगुरुः। एतेषां त्रयाणां साहाय्येन मम पुत्रेषु परिवर्तनम् आनेतव्यम् इति आलोचितवान् दयारामः।

सः प्रथमं कविना मिलितवान्। स्वस्य ज्येष्ठपुत्रस्य स्वभावं विस्तरेण परिचाय्य तं प्रार्थितवान् – "मित्र! भवान् केनापि उपायेन मम पुत्रं मार्गम् आनयतु" इति। अनन्तरं पुत्रं तस्य गृहे परित्यज्य आगतवान् च।

एवम् एव द्वितीयं पुत्रं राजकीयपुरषस्य गृहे, कनिष्ठं पुत्रं धर्मगुरोः गृहे च परित्यज्य, इतः परं मम पुत्राः उत्तमाः भविष्यन्ति इति आलोच्य निश्चिन्तः अभवत्।

कविगृहे स्थिताय दयारामस्य ज्येष्ठपुत्राय तु आरम्भे साहित्यविषयाः सर्वथा न अरोचन्त। किन्तु क्रमशः आसक्तिः वर्धमाना जाता। सः स्वस्य गुरोः निर्धनतां प्रतिदिनं पश्यति।

सर्वेषां कवीनाम् अपि एषा एव अवस्था इति ज्ञात्वा सः स्वबुद्धिमत्तया सर्वान् कवीन् मेलयित्वा एकं साहित्यसङ्घं संस्थापितवान्।

साहित्यसङ्घस्य सदस्येषु केचन निर्धनाः, अन्ये केचन कीर्तिकाङ्क्षिणः इति सः ज्ञातवान्। तादृशानां कवीनां कृतीः अल्पेन मूल्येन महता प्रमाणेन क्रीतवान् सः। अनन्तरं

ताः कृतीः महता मूल्येन स्वचातुर्येण विक्रीय सम्यक् धनसम्पादनं कृतवान्। सामान्यानां कवीनां कृतीः स्वनाम्ना प्रकाशितवान्। एतेन दत्तेन धनेन सन्तुष्टाः केचन एतं कविकिशोरबिरुदेन सत्कृतवन्तः।

कविः एतस्य सर्वान् व्यवहारान् परिशील्य अन्ते दयारामम् उक्तवान्– "मित्र! भवतः पुत्रस्य स्वभावं परिवर्तयितुम् सर्वथा न शक्यते। मया बहुधा प्रयत्नः कृतः। किन्तु सर्वे यत्नाः विफलाः। मां क्षाम्यतु कृपया" इति।

दयारामस्य द्वितीयः पुत्रः राजकीयपुरुषस्य गृहे अस्ति खलु? राजकीयः व्यवहारः, जनानां समस्याः च आरम्भे तम् उद्वेजयन्ति स्म। किन्तु क्रमशः सः राजकीयव्यवहारे रुचिं दृष्टवान्। क्रमशः सः स्थानीयानां नायकानां मैत्रीं सम्पादितवान्। जनानां दौर्बल्यं किम् इति सम्यक् ज्ञातवान्। भीरून् सः भाययितुम् आरब्धवान्। धैर्यशालिनां पुरतः विनयं प्रदर्शितवान्। जातिमतविद्वेषकराणि भाषणानि कुर्वन् ख्यातिं प्राप्तवान्। निर्वाचनसन्दर्भे मतं कथं प्राप्तव्यम् इति ज्ञातवान्। धनं विनियुज्य बलं प्रयुज्य च निर्वाचने जयं प्राप्य प्रजाप्रतिनिधिः अपि जातः सः।

तस्य एतादृशं व्यवहारं दृष्ट्वा राजकीयः पुरुषः दयारामम् उक्तवान्– "मित्र! माम् अन्यथा मा भावयतु। भवतः द्वितीयः पुत्रः माम् अतिरिच्य प्रवृद्धः अस्ति। तस्य समीकरणं मया न शक्यम्" इति।



धर्मगुरुः स्वसमीपम् आगतं दयारामस्य तृतीयं पुत्रम् उक्तवान्– "भवान् मम समीपं यत् आगतवान् तत् उचितम् एव जातम्। ऐहिकव्यवहारेषु वाणिज्यबुद्धिः भवति एव। मनसः परिवर्तनार्थं धर्मः अत्युत्तमम् औषधम्" इति।

दयारामपुत्राय धर्मगुरोः बोधनं सर्वथा न रोचते। तत्त्वविचारान् श्रोतुम् आगच्छतां जनानां परिचयं मैत्रीं च सम्पादितवान् सः। भक्तजनानां दौर्बल्यानि कानि इत्यपि ज्ञातं तेन। बहवः अशान्त्या पीड्यमानाः भवन्ति इति तेन अवगतम्।

सः प्रचारं कृतवान् यत् गुरौ अविद्यमानं सामर्थ्यं मयि अस्ति इति। गुरुणा निषिध्यमानः अपि जनेभ्यः धनं सङ्गृह्य एकं मन्दिरं निर्मितवान्। भक्ताः बहवः मन्दिरम् आगताः। धनं चापि अर्पितवन्तः। मन्दिरस्य व्यवस्थानिर्वहणार्थं काचित् समितिः रचिता। तस्याः समित्याः अध्यक्षः जातः दयारामस्य तृतीयपुत्रः।

मन्दिरतः प्राप्ते धने किञ्चित् दानार्थं व्ययीकुर्वन् कृतस्य चतुर्गुणितं प्रचारं कुर्वन्, अवशिष्टं धनं स्वयं स्थापयन् अपि सः अल्पे एव काले 'धार्मिकशिरोमणिः' इति ख्यातिं प्राप्तवान्।

धर्मगुरुः कदाचित् दयारामम् उक्तवान्– "भोः, भवतः पुत्रस्य मनःपरिवर्तनं कर्तुं मया न शक्तम्। अन्येन अपि न शक्यते इति मम दृढविश्वासः अस्ति। तस्य धमनीषु वाणिज्यप्रवृत्तिः प्रवहति" इति।

पुत्रान् गृहं प्रत्यानीतवान् दयारामः। 'पुत्राणां प्रवृत्तौ परिवर्तनं तु न शक्यते। अतः प्रवृत्तेः प्रोत्साहः एव वरम्' इति आलोच्य सः स्वसम्पत्तिं त्रिधा विभज्य पुत्रेभ्यः दत्त्वा तान् नगरं प्रेषितवान्। ते तत्र रुच्यनुगुणं वाणिज्यम् आरभ्य अल्पे एव काले लक्षाधीशाः जाताः।

एतावता दयारामः सम्यक् अवगतवान् यत् वाणिज्यबुद्धिः तैलसदृशी, सा अन्येन केनापि न मिलति इति।





# पिता पुत्रः च

भगवान् श्रीमन्नारायणः शेषतल्पे शयानः आसीत्। महालक्ष्मीः तस्य पार्श्वे उपविश्य पतिसेवायां निरता आसीत्। नारायणस्य मुखे यथापूर्वं निर्लिप्तता। तदा लक्ष्मीः मन्दस्वरेण पतिं पृष्टवती– "श्रीमन्! मम कश्चन सन्देहः अस्ति, निवेदयामि वा?" इति।

नारायणः तु उत्तरं किमपि अयच्छन् पत्नीं कटाक्षेण पश्यन् मन्दहासं प्रकटितवान्। एतत् सम्मतिलक्षणं मन्यमाना लक्ष्मीः पृष्टवती– "लक्षशः जनाः भवन्तं पूजयन्तः अपेक्षाः प्रकटयन्ति। किन्तु तेषां सर्वेषाम् अपेक्षां न पूरयति भवान्। तेषां परितापं दृष्टवत्याः मम महान् खेदः। एवम् उपेक्षा किमर्थम्?" इति।

नारायणः लक्ष्मीं पश्यन् मन्दहासपूर्वकम् उक्तवान्– "पात्रापात्रताम् अपरिशील्य सर्वे अनुगृहीताः चेत् ते एव सुखेन वञ्चिताः भवेयुः। ते परिणामविषये अचिन्तयन्तः स्वेच्छया अपेक्षां प्रकटयन्ति। तेषां योगक्षेमौ मया एव खलु वोढव्यौ? अतः अहं विविच्य अनुग्रहं करोमि। भवती तु लोकवत्सला। तथापि अनुग्रहसमये पात्रत्वं चिन्तयति चेत् वरम्" इति।

लक्ष्मीदेवी मौनं स्थितवती। तस्याः मौनेन एव नारायणः ज्ञातवान् यत् मम वचनैः एषा न तृप्ता इति। अतः सः पुनः उक्तवान्– "मम वचनस्य समर्थकम् एकम् उदाहरणं श्रावयामि, शृणोतु। कस्मिंश्चित् ग्रामे सूर्यः



नाम कश्चित् अस्ति। सन्तानरहितः सः सपत्नीकः मां पूजयन् पुत्रं प्रार्थितवान्। अहं तं वरेण अनुगृहीतवान्। तस्य पुत्रः जातः। पुत्रस्य नाम सत्यनारायणः इति निश्चितम्। एतन्मध्ये सूर्यस्य पत्नी अकस्मात् दिवङ्गता। पुत्रं योग्यया रीत्या पोषयितुं न शक्तवान् सः। पुत्रः बुद्धिविहीनः सन् वर्धमानः अस्ति।

पितापुत्रयोः स्वभावे महत् अन्तरं दृश्यते। एषः मम पुत्रः भवितुम् अनर्हः इति पिता भावयति। 'मम शत्रुः एषः' इति पुत्रः पितुः विषये चिन्तयति। उभयोः अपि इदानीं मनःसमाधानं नास्ति। पश्यतु, तेन प्रार्थितः वरः दत्तः मया। तथापि प्रयोजनं किमपि न सिद्धम्" इति।

"अन्यः वरः दातव्यः। तौ सुखेन यथा निवसेतां तथा करणीयम्। वरदानं तु शक्यं खलु?" इति उक्तवती लक्ष्मीः।

लक्ष्म्याः अपेक्षां तिरस्कर्तुम् अनिच्छन् विष्णुः– "अस्तु तावत्। अन्यं वरं ददामि" इति उक्तवान्।

* * * *

कदाचित् सत्यनारायणः शालार्थं प्रस्थितः शालाम् अगत्वा वाटिकायां किञ्चित् समयं यापयित्वा बुभुक्षाकारणतः शीघ्रम् एव गृहं प्रत्यागतवान्।

"एतावच्छीघ्रं किमर्थम् आगतवान्?" इति असमाधानेन पृष्टवान् पिता सूर्यः।

"कक्ष्यायां मम उदरवेदना आरब्धा। मम कष्टं दृष्ट्वा अध्यापकः मां शीघ्रम् एव गृहं प्रेषितवान्" इति उत्तरं दत्तवान् सत्यनारायणः।

"उदरवेदना वा? उपवासेन सा अपगच्छति। अद्य पाचिका लड्डुकादिकं सज्जीकृतवती। दौर्भाग्यं नाम भवान् तत् खादितुं न अर्हति। चौर्येण खादितुं प्रयत्नं करोति चेत् भवन्तं तप्तायःशलाकया दण्डयेयम्। प्रकोष्ठे तूष्णीं शयनं करोतु" इति उक्त्वा सूर्यः पुत्रं प्रकोष्ठस्य अन्तः प्रेषयित्वा बहिस्तात् कीलितवान्।

प्रकोष्ठात् बहिः उपविष्टः पिता चिन्तयति– 'अहो, सौभाग्यं बाल्यस्य! न कापि चिन्ता। नियतरूपेण प्रतिदिनं

शालागमनं, गृहे समीचीनं भोजनम्। पुनः स्वेच्छया विहारः। न कुटुम्बनिर्वहणभारः। न वा आयव्ययस्य चिन्ता। अहं यदि इदानीं बाल्यं प्राप्नुयाम् तर्हि सुखेन कालयापनम् अकरिष्यम्। किन्तु एतस्मिन् जन्मनि तादृशं भाग्यं कुत्र मम?" इति।

प्रकोष्ठे स्थितः पुत्रः सत्यनारायणः एवं चिन्तयति– "अहो! ज्येष्ठैः क्रियमाणाः निर्बन्धाः! कारागारतुल्या शाला, नीरसः पाठः, यमतुल्यौ अध्यापकः पिता च। जुगुप्साजनकं पठनम्! ज्येष्ठाः मां सदा तर्जयन्ति। तेषां तर्जयिता तु कोऽपि नास्ति। ते यथेष्टं भक्ष्याणि खादन्ति। यस्य खादने इच्छा भवति तत् भक्ष्यं कारयन्ति, खादन्ति च। यत्र इच्छन्ति तत्र गच्छन्ति। सर्वथा स्वातन्त्र्यं तेषाम्। अहं तादृशीम् अवस्थां कदा वा प्राप्नुयाम्? तादृशस्वातन्त्र्यप्राप्त्यर्थं मया इतोऽपि कति वर्षाणि प्रतीक्षणीयानि?" इति।

लक्ष्म्याः मनसः तृप्त्यर्थं नारायणः उभयोः अपि अपेक्षां वरदानेन पूरितवान्।

प्रकोष्ठात् बहिः स्थितः सूर्यः सत्यनारायणस्य रूपं प्राप्तवान्। सत्यनारायणः तु पितुः सूर्यस्य रूपं प्राप्तवान् अस्ति। किन्तु उभौ अपि आत्मनः रूपपरिवर्तनं सर्वथा न जानीतः।

पिता सूर्यः कार्यनिमित्तं कुत्रापि प्रस्थितवान्। परितः स्थितानि गृहाणि



उन्नतानि इव दृश्यन्ते। गृहाणि पूर्णतः द्रष्टुं शिरः उन्नेतव्यं भवति स्म। मनसः चिन्तायाः कारणतः नेत्रयोः शक्तिः नष्टा स्यात् इति आलोचितवान् सूर्यः।

मार्गे गोपालः मिलितः। तं समीपम् आह्वयन् सूर्यः पृष्टवान्– "किं भोः गोपाल! कुतः आगच्छन् अस्ति?" इति।

एतत् श्रुत्वा गोपालः नितरां कुपितः। "अये मूर्ख! कियत् धाष्टर्यं भवतः? बालः भवान् ज्येष्ठं मां नाम्ना आह्वयति खलु? तदपि मार्गे! भवतः पितरं सूचयन् सम्यक् दण्डयिष्यामि" इति कोपेन वदन् दण्डम् उन्नीय ताडनार्थम् आगतवान्।

सूर्यः भीतः सन् "अये गोपाल! किम् एतत्?" इति वदन् ततः धावितवान्। स्वस्य



धावनवेगं दृष्टवतः तस्य महदाश्चर्यम्! एषु दिनेषु वेगेन चलनम् अपि कष्टकरम् आसीत्। यतः शरीरं स्थूलं शक्तिहीनं च जातम् आसीत्। शरीरभारे एतादृशी लाघवम् कथम् आगतम् इति न जानाति सूर्यः। तस्य तु महान् सन्तोषः यत् मत्तः अपि कनिष्टः दृढकायः गोपालः माम् अनुसर्तुं न शक्तवान् इति।

अनन्तरं सूर्यः धावनं स्थगयन्– "मया किमर्थं धावनं क्रियमाणम् अस्ति? गोपालः किमर्थं वा मां ताडयितुम् उद्युक्तः? अद्य सर्वं विचित्रं दृश्यते खलु?" इति आलोच्य उन्मत्तः इव उच्चैः हसितवान्।

तावता कश्चित् तस्य स्कन्धे स्वहस्तं स्थापयन्– "अये! अद्य शालायाम् अनुपस्थितः अत्र किं कुर्वन् अस्ति? कस्य वाटिकातः किम् अपहृत्य खादितवान्? अथवा केनापि सह क्रीडितवान् वा? का क्रीडा? कियत्पर्यन्तं प्रवृत्ता?" इति पृष्टवान्।

सूर्यः आश्चर्येण परिवृत्य दृष्टवान्। कश्चन अष्टवर्षीयः बालकः एतं दृष्ट्वा हसन् अस्ति। एतत् दृष्टवतः सूर्यस्य महान् कोपः आगतः।

"अये! मम स्कन्धे हस्तं स्थापयति खलु? कियत् औद्धत्यं भवतः? कः भवान्?" इति कोपेन पृष्टवान् सूर्यः।

"अहो! अहं कः इति न जानाति भवान्? मयि औद्धत्यम् आरोपयति खलु? श्वः शालाम् आगच्छतु। अध्यापकः सम्यक् दण्डयन् सर्वं स्मारयिष्यति" इति उक्त्वा उपहसन् ततः धावितवान् सः बालकः।

'मूर्खः अयम्। कः अध्यापकः मां किमर्थं ताडयेत्? अहं किमर्थं वा शालां गच्छेयम्?' इत्यादिकम् आलोचयन् सूर्यः धनिकस्य शिवरामस्य आपणं गत्वा – "श्रीमन्! अर्धगोणीमितः तण्डुलः, किलोमिता आढकी, पादकिलोमिता तिन्त्रिणी च आवश्यकाः। सर्वं ददातु" इति उक्तवान्।

"अवश्यं ददामि। प्रथमं धनम् अत्र स्थापयतु" इति हसन् उक्तवान् धनिकः।

'अद्यावधि शिवरामः विना वचनं वस्तूनि ददाति स्म। धनम् अनन्तरं स्वीकरोति स्म। सप्ताहानन्तरम् अपि कदाचित् धनं दत्तम्। अद्य तु वस्तुदानात् पूर्वम् एव धनं पृच्छति

खलु?' इति आलोचयन् सूर्यः धनस्वीकरणार्थं कोषे हस्तं प्रसारितवान्। तत्र धनं कथं भवेत्? तत्र तु सुधाखण्डाः, वर्णमय्यः शिलाः, बीजानि, रज्जुः, मयूरपिच्छम् इत्यादयः दृश्यन्ते! कथम् एते मम कोषे आगताः इति आश्चर्येण चिन्तयति सूर्यः।

वस्तुतः तत्समये सूर्यस्य महती बुभुक्षा आसीत्। वस्तूनां स्वीकरणानन्तरम् उपाहारमन्दिरं गत्वा किमपि खादनीयम् इति तस्य विचारः आसीत्। इदानीं तु धनाभावतः अपमाननम् एकत्र। अपरत्र उपाहारमन्दिरस्य पुरतः विविधानि खाद्यानि खादतां दर्शनेन जायमाना असूया!

एवं पश्यन् सः अकस्मात् द्वारपार्श्वे स्थापितं दर्पणं दृष्टवान्। तत्र तदीयं प्रतिबिम्बं दृश्यते स्म। दर्पणे सत्यनारायणस्य रूपं दृश्यते! 'एवं तर्हि अहं कः? सूर्यः, उत सत्यनारायणः? अहं पुत्रश्च अभिन्नौ वा? आवयोः अभेदः कथं वा शक्येत? यतः मया एव स्वयं सः प्रकोष्ठे स्थापितः। अहो आश्चर्यम्!'

सूर्यस्य स्वदृष्टिशक्तौ एव अविश्वासः। सः अवनम्य पादभागं दृष्टवान्। कोमलौ ह्रस्वौ पादौ! पादयोः न पादरक्षा! कटौ तु अर्धोरुकं दृश्यते, न तु वेष्टी। सः शिरः स्पृष्टवान्। खल्वाटता न अनुभूता तेन। शिरसि विपुलाः केशाः दृश्यन्ते। मुखे श्मश्रु न दृश्यते। उपनेत्रम् अपि मुखे नास्ति। तथापि सर्वाणि वस्तूनि स्फुटं दृश्यन्ते!

'मम रूपस्य परिवर्तनं जातम्। अहं पुत्रस्य





रूपं प्राप्तवान् अस्मि' इति ज्ञातवान् सूर्यः। एवं तर्हि पुत्रः इदानीं कथम् अस्ति? इति प्रश्नः मनसि उत्पन्नः। काचित् अस्पष्टा भीतिः मनसि उद्भूता।

सत्यनारायणः पित्रा प्रकोष्ठे स्थापितः आसीत् खलु? पितुः बहिर्गमनं निश्चित्य सः द्वारं पादेन निरन्तरं ताडितवान्। ताडनशब्दं श्रुत्वा पाचिका द्वारशृङ्खलाकीलनम् अपनीय द्वारम् उद्घाटितवती। तं दृष्ट्वा– "हा हन्त! भवन्तं प्रकोष्ठे स्थापयित्वा कः कीलितवान्? सत्यनारायणस्य कार्यं वा एतत्? सः एतावत् औद्धत्यं कृतवान् वा! पिञ्जरम् एव बन्धने स्थापितवान् खलु सः!" इति उद्गारं प्रकटितवती।

"अये! तूष्णीं तिष्ठतु। यथा स्फुरति तथा मा भणतु" इति तर्जनस्वरेण उक्तवान् सत्यनारायणः।

इतः पूर्वं कदापि कोपेन किमपि अनुक्तवान् मम स्वामी अद्य किमर्थम् एवं व्यवहरति इति न जानाति सा। सत्यनारायणः पितुः रूपं प्राप्तवान् अस्ति इति सा कथं वा जानीयात्?

सत्यनारायणः ततः प्रस्थाय सोपानमार्गेण अट्टम् आरोढुम् उद्युक्तः। पिता धनं कुत्र स्थापयति इति सः जानाति। किन्तु सः वेगेन आरोहणं कर्तुं न शक्तवान्। पादौ असहकारं प्रदर्शितवन्तौ। पञ्चषाणां सोपानानाम् आरोहणेन एव जानुग्रन्थौ वेदना आगता। सः तत्रैव पतितवान्। तथापि बलात् कथञ्चित् उत्थाय जानुग्रन्थेः उपरि हस्तौ स्थापयन् दीर्घं निःश्वसन् अट्टं प्राप्तवान्।

'अहो श्रान्तिः! पाचिकया कृतानि भक्ष्याणि प्रथमं खादामि। तदनन्तरम् अन्यानि कार्याणि' इति आलोच्य सः पाचिकाम् आहूय भक्ष्याणि आनेतुं सूचितवान्।

पाचिका भीता सती स्थालिकायां भक्ष्याणि स्थापयित्वा आगत्य– "इदमिदानीं भक्ष्याणि खादितानि खलु भवता? एतानि पुत्रनिमित्तं स्थापितानि मया। भक्ष्याणि अधिकतया खादति चेत् उदरवेदना भवन्तं निश्चयेन बाधते। पुनः वैद्यः द्रष्टव्यः भवेत्" इति उक्तवती।

"मह्यं कदा भक्ष्याणि दत्तवती भवती? उदरवेदना इति मया असत्यम् उक्तम्।

mदर्थम् एव स्थापितानि खलु एतानि? पुनः दाने किमर्थं सङ्कोचः? किं पक्षपातम् आचरति वा भवती?" इति कोपेन पृष्टवान् सत्यनारायणः।

किम् एतत् प्रवर्तते इति न जानाति पाचिका। यजमानस्य बुद्धिः भ्रष्टाः अस्ति इति निश्चितवती सा। झटिति वैद्यम् आनयतु इति उक्त्वा सेवकं वैद्यगृहं प्रेषितवती।

सत्यनारायणः भक्ष्याणि यथेष्टं खादितवान्। पञ्चसु निमेशेषु उदरवेदना आरब्धा, प्रतिक्षणं वृद्धिं गता अपि। तावता वैद्यः आगतः। सः उदरवेदनार्थम् औषधं दत्त्वा ततः निर्गतवान्। वैद्यः आदरेण व्यवहृतवान् आसीत्। 'बाले मयि एतावान् आदरः किमर्थम्?' इति न जानाति सत्यनारायणः। औषधप्रभावतः अल्पे एव काले उदरवेदना न्यूना जाता। सत्यनारायणः उत्थाय उत्पीठिकायाः अन्तःपेटिकातः कुञ्चिकां स्वीकृत्य कपाटिकासमीपं गतवान्। कपाटिकायां योजिते दर्पणे स्वप्रतिबिम्बं दृष्ट्वा सः दिग्भ्रान्तः जातः। दर्पणे पितुः रूपं दृश्यते!

"हा! अनर्थः जातः" इति स्वगतं वदन् सः परिवृत्य पश्यति– किन्तु तत्र पिता न दृश्यते! दर्पणे दृश्यमानः खल्वाटः, श्मश्रुयुक्तः, उपनेत्रधारी च। सत्यनारायणः स्वस्य अङ्गानि पुनः पुनः स्पृष्ट्वा परीक्षितवान्। 'मया कथमपि पितुः रूपं



प्राप्तम् अस्ति' इति ज्ञातवान् सः।

पितृरूपप्राप्त्या सः यद्यपि क्षणकालं दिग्भ्रान्तः, तथापि अनन्तरक्षणे नितरां सन्तुष्टः। इतः परं शाला गन्तव्या नास्ति। उपाध्यायस्य ताडनम् अनुभोक्तव्यम् अपि नास्ति। खादने अपि स्वच्छन्दता। अटने अपि स्वातन्त्र्यम्। अत्रत्यस्य समग्रस्य धनस्य स्वामित्वं न अन्यस्य! परमसन्तुष्टः सः नृत्यं कर्तुम् उद्युक्तः शक्त्यभावात् तत्रैव पतितः।

'इदानीं मम पितुः का अवस्था स्यात्?' इति विचारः आगतः सत्यनारायणस्य मनसि।

एतावता केनचित् क्रियमाणः सोपानारोहणशब्दः तेन श्रुतः। अष्टवर्षीयः कश्चित् सोपानानि आरुह्य आगच्छन्

अस्ति। सत्यनारायणः परीक्षादृष्ट्या दृष्टवान्। अहो! स्वस्यैव रूपं तत्!

पिता मदीयं रूपं प्राप्तवान् अस्ति इति ज्ञातवान् सत्यनारायणः। पितरं सम्यक् पीडयिष्यामि इति आलोच्य सः कुञ्चिकां झटिति कोषे स्थापितवान्।

सूर्यः उपरि आगत्य स्वस्य रूपेण स्थितं पुत्रं दृष्टवान्। पुत्रस्य अपि रूपपरिवर्तनं दृष्ट्वा सः उच्चैः हसितवान्। सत्यनारायणः तु मौनं स्थितवान्।

हासं निगृह्य पुत्रं पृष्टवान् सूर्यः– "आवयोः किम् अभवत्? एतत् कथं प्रवृत्तम् इति भवान् किमपि जानाति वा?" इति।

"अहं न जानामि" इति उत्तरं दत्तवान् सत्यनारायणः।

"महती समस्या उपस्थिता खलु भोः? मम शरीरे भवान् अस्ति, भवतः शरीरे अहम् अस्मि इति जनाः कथं जानीयुः? ते कथं वा ज्ञापनीयाः? मम तु बहूनि कार्याणि सन्ति। ऋणत्वेन दत्तं धनं त्वरया प्रतिस्वीकरणीयम् अस्ति। एतेन रूपेण तानि कार्याणि अहं कथं साधयामि? कस्य साहाय्यं प्रार्थयामि? कथञ्चित् मम रूपपरिवर्तनं सप्रमाणं निरूपयामि चेदपि जनाः मयि आदरं प्रकटयेयुः वा? इदानीं मया किं करणीयम्?" इति सखेदम् उक्तवान् सूर्यः।

"यथाकथम् अपि करोतु भवान्" इति उदासीनतया उक्तवान् सूर्यनारायणः।

"इतः परं भवतः विद्याभ्यासस्य का गतिः?" इति आतङ्केन पृष्टवान् सूर्यः।

"एतेन रूपेण शाला गन्तव्या इति वा भवतः आशयः? तत् सर्वथा न शक्यते" इति असमाधानेन उक्तवान् सत्यनारायणः।

"भवान् शालां गच्छतु, मा वा, विद्याभ्यासं करोतु, आलस्येन अटतु वा, तेन मम कापि हानिः नास्ति। यथा रोचते तथा करोतु। मम तु मदीयानां कार्याणां चिन्ता" इति वदन् अन्तःपेटिकायां कुञ्चिकायाः अन्वेषणम् आरब्धवान् सूर्यः।

–(अनुवर्तते)






# कूपिकापिशाचः

अपरिमितया धीशक्त्या युक्तः अहं परिमितशक्तिमन्तं वेतालं जेष्यामि एव इति भावयन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! अस्मिन् मध्यरात्रे श्मशानमार्गेण गच्छन् यत् कार्यप्रवृत्तः भवान् तत् सर्वथा अभिनन्दनयोग्यम् एव। किन्तु जागरूकः भवतु। फलप्राप्तिसमये सूक्ष्मदर्शिता समयस्फूर्तिः च न प्रदर्शिता चेत् हस्तगतम् अपि फलं च्युतं भवेत्। अत्र उदाहरणरूपेण श्रीमुखस्य कथां श्रावयामि। श्रद्धया कथां भवान् शृणोति चेत् मार्गायासं सर्वथा विस्मरिष्यति" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं कस्मिंश्चित् ग्रामे श्रीमुखो नाम कश्चन निर्धनः निवसति स्म। सः आकारेण

## वेतालकथा



परमसुन्दरः। धनिकत्वं प्राप्तव्यम् इति तस्य महती इच्छा। अतः सः दृष्टानां सर्वेषां संन्यासिनां सेवां कुर्वन् 'ऐश्वर्यप्राप्तेः उपायं सूचयन्तु' इति प्रार्थयति स्म।

एकदा कश्चन संन्यासी श्रीमुखस्य मुखं परीक्षादृष्ट्या दृष्ट्वा— "भोः भवतः गृहे स्थिता काचित् दुष्टशक्तिः भवन्तं पीडयन्ती अस्ति। अतः भवतः इष्टं न सिध्यति। अहम् एकं तायकं ददामि। तत् गृहे कुत्रचित् गर्ते स्थापयतु। अचिरात् एव भवान् उत्तमानि दिनानि द्रक्ष्यति" इति उक्त्वा एकं तायकम् अभिमन्त्र्य दत्तवान्।

श्रीमुखः तत् तायकं स्वीकृत्य सन्तोषेण गृहं गतवान्। तायकस्थापनार्थं सः गृहस्य कोणे गर्तं कर्तुम् आरब्धवान्। किञ्चित् खननेन तेन काचित् काचमयी कूपिका तत्र दृष्टा।

कूपिकायाः आकारः परमसुन्दरः। कूपिकायाः अन्तः कश्चन द्रवः दृश्यते स्म। श्रीमुखः तायकं गर्ते पातयित्वा दृढं लग्नं कूपिकावरणं बलात् अपनीतवान्।

तावता तत्र सर्वत्र विचित्रः धूमः प्रसृतः। श्रीमुखः अन्धकारेण आवृतः अभवत्। किञ्चित्कालानन्तरं धूमः अपगतः। इदानीं कश्चन भयङ्करः पिशाचः तस्य पुरतः स्थितः दृश्यते।

पिशाचदर्शनात् श्रीमुखः नितरां भीतः। किन्तु पिशाचः प्रीतिपूर्णेन स्वरेण अवदत्— "भवत्कारणतः अहं बन्धमुक्तः जातः। अतः अहं नितरां कृतज्ञः अस्मि। दर्शनेन ज्ञायते यत् भवान् सर्वथा निर्धनः इति। भवान् ऐश्वर्यम् इच्छति खलु? तर्हि मया यथा उच्यते तथा आचरतु। तेन भवान् चिरकालं सुखेन स्थास्यति" इति।

एतत् श्रुतवतः श्रीमुखस्य महान् सन्तोषः जातः। सः पिशाचस्य सूचनाम् अङ्गीकृतवान्। पिशाचः एवम् असूचयत्— "इतः दशयोजनदूरे विष्णुपुरे रत्नगुप्तः नाम धनिकः अस्ति। तस्य पुत्र्याम् अहं आविष्टा भविष्यामि। पुत्रीं पिशाचपीडातः मोचयितुं रत्नगुप्तः बहुधा प्रयत्नं करिष्यति। किन्तु कोऽपि मां ततः निवारयितुं न शक्नोति। पञ्चषाणां दिनानाम् अनन्तरं भवान् तत्र

आगच्छतु। 'अहं पिशाचपीडां परिहरिष्यामि' इति वदतु च। भवान् यदा तत्र आगमिष्यति तदा अहं तां त्यक्ष्यामि। प्रतिफलरूपेण रत्नगुप्तः स्वपुत्रीं भवते दास्यति। तां परिणीय भवान् सुखेन जीवतु" इति।

एतदनन्तरं पिशाचः पुनः अवदत्– "अन्यः अपि अंशः अत्र स्मर्तव्यः यत् यदा भवान् तत्र आगत्य मां पश्यति तदा 'कूपिकापिशाच!' इति मां द्विवारं सम्बोधयतु। तदा अहं भवन्तम् अभिज्ञातुं शक्नोमि। मम स्मरणशक्तिः क्षीणा इत्यतः अहं भवतः आकारं विस्मरेयम्। तदर्थम् एषा जागरूकता" इति।

श्रीमुखः अङ्गीकारपूर्वकं शिरः चालितवान्।

अनन्तरं पिशाचेन यथा उक्तं तथैव प्रवृत्तम्। रत्नगुप्तस्य पुत्रीं परित्यज्य गच्छन् पिशाचः श्रीमुखम् अवदत्– "अये! मया प्रत्युपकारः कृतः। अतः इतः परम् आवयोः कोऽपि सम्बन्धः नास्ति। इतः परं भवान् मम व्यवहारे मध्ये मा प्रविशतु। कदाचित् यदि भवान् मध्ये प्रविशेत् तर्हि अहम् आजीवनं भवन्तं पीडयिष्यामि। एतत् वचनं सदाऽपि स्मरतु" इति।

श्रीमुखः रत्नगुप्तस्य पुत्रीं श्रीवल्लीं परिणीय सुखेन दिनानि यापयन् आसीत्। एवं स्थिते कदाचित् वार्ता आगता यत् तद्देशस्य राजकुमारी पिशाचग्रस्ता अस्ति इति।



कोऽपि राजकुमारीं पिशाचपीडातः मोचयितुं न शक्तवान् आसीत्। अतः राज्ञा वार्ता प्रसारिता यत् यः राजकुमारीं पिशाचपीडातः मोचयति तस्मै एव सा दीयते इति।

'कथञ्चित् राजकुमारीं पिशाचपीडातः मोचयामि चेत् अहं तां परिणीय राज्यस्य उत्तराधिकारी भवितुम् अर्हामि' इति चिन्तयति श्रीमुखः।

कूपिकापिशाचः एव राजकुमारीं पीडयन् स्यात् इति तस्य तर्कः। 'मम व्यवहारे मा प्रविशतु' इति तेन पिशाचेन स्पष्टं सूचितम् आसीत्। अतः इदानीं तत्र गतं चेत् पिशाचः किमपि अहितं कुर्यात् इति भीतिरपि अस्ति श्रीमुखस्य।



एतेषु एव दिनेषु संन्यासी तस्य गृहम् आगत्य उक्तवान्– "श्रीमुख! भवान् रत्नगुप्तस्य कुमारीं पिशाचपीडातः मोचितवान् अस्ति। तेनैव पिशाचेन इदानीं राजकुमारी गृहीता अस्ति। राजकुमार्याः दुरवस्थां द्रष्टुम् अशक्तः अहं भवत्समीपम् आगतवान् अस्मि। पिशाचपीडापरिहारकं मन्त्रम् अहं जानामि। किन्तु यः पिशाचं सम्यक् जानाति सः केवलं तस्य मन्त्रस्य उपयोगेन पिशाचं निवारयितुम् अर्हति। अतः पिशाचस्य अभिज्ञानं कथम् इति मां सूचयतु। एतेन राजकुमार्याः रक्षणे भवता महोपकारः कृतः भवति" इति।

एतत् श्रुत्वा श्रीमुखः क्षणकालम् आलोच्य उक्तवान्– "श्रीमन्! भवान् तु सर्वसङ्गपरित्यागी संन्यासी। राजकुमारीं पिशाचपीडातः मोचयति चेत् भवतः कः लाभः? अहं तु ऐहिकसुखम् इच्छामि। अतः तं मन्त्रं माम् उपदिशतु। तद्बलात् राजकुमारीं पिशाचपीडातः मोचयन् अहं तां परिणीय एतस्य राज्यस्य उत्तराधिकारी भविष्यामि" इति।

संन्यासी हसन् उक्तवान्– "भोः श्रीमुख! पिशाचस्य अपेक्षया अधिकं नैतिकबलं यस्य भवति सः एव पिशाचं निवारयितुम् अर्हति। अन्यथा स च मन्त्रः विपरीतं परिणामं जनयेत्" इति।

तदा श्रीमुखः– "श्रीमन्! पिशाचस्य अपेक्षया मानवः सदापि श्रेष्ठः एव। अतः निश्शङ्कं भवान् मां मन्त्रम् उपदिशतु" इति धैर्येण उक्तवान्।

तदा संन्यासी– "तस्य पिशाचस्य किम् अभिज्ञानम्? तत् वदतु। तदनुगुणं मन्त्रम् उपदिशामि" इति उक्तवान्।

"कूपिकापिशाचः इति तस्य नाम" इति उक्तवान् श्रीमुखः। संन्यासी एतन्नामानुगुणम् उचितं मन्त्रं श्रीमुखम् उपदिष्टवान्।

अनन्तरं पुनः उक्तवान्– "राजकुमार्याः पुरतः एकां कूपिकां स्थापयित्वा मया उपदिष्टं मन्त्रं जपन्– 'अये कूपिकापिशाच! राजकुमारीं परित्यज्य कूपिकां प्रविशतु' इति आदिशतु। पिशाचः यदा कूपिकां प्रविशति

तदा आवरणेन कूपिकायाः पिधानं सम्यक् करोतु" इति।

श्रीमुखः महता उत्साहेन कूपिकां स्वीकृत्य राजकुमारीसमीपं गतवान्।

रत्नगुप्तस्य पुत्रीं पिशाचपीडातः मोचितवान् अस्ति अयम् इति ज्ञात्वा राजा श्रीमुखं महता आदरेण स्वागतीकृत्य सत्कृतवान्। तस्य निमित्तं वैभवोपेतां व्यवस्थां कल्पितवान् च।

उत्तमे मुहूर्ते श्रीमुखः पिशाचग्रस्तायाः राजकुमार्याः पुरतः स्थित्वा कूपिकां समीपे संस्थाप्य मन्त्रं जपन्– "कूपिकापिशाच! कूपिकां प्रविशतु" इति उक्तवान्।



अपरस्मिन् क्षणे राजकुमारी उच्चैः आक्रोशनं कुर्वती मञ्चतः उत्थाय भूमौ पतितवती, मूर्च्छां गतवती चापि।

किन्तु तावता श्रीमुखः मुखे विकृतिं प्रदर्शयन् उन्मत्तः इव आचरन् उच्चैः आक्रोशनं कुर्वन् हसन् स्ववस्त्राणि छित्वा नृत्यम् आरब्धवान्।

पिशाचः राजकुमारीं परित्यज्य श्रीमुखं गृहीतवान् अस्ति इत्येतम् अंशं तत्रस्थाः सर्वे ज्ञातवन्तः।

तत्समये तत्र उपस्थितः संन्यासी श्रीमुखं पश्यन् मन्त्रोच्चारणं कृत्वा गम्भीरेण स्वरेण– "अये कूपिकापिशाच! कूपिकां प्रविशतु" इति आदिष्टवान्।

श्रीमुखः विकारध्वनिम् उत्पादयन् अधः पतितवान्। तस्य शरीरात् निर्गतः कश्चन कृष्णधूमः कूपिकां प्राविशत्।

संन्यासी तां कूपिकाम् आवरणेन दृढं पिधाय बहिः नीत्वा निर्जने प्रदेशे कुत्रापि संस्थाप्य प्रत्यागतवान्।

अल्पे एव काले राजकुमारी श्रीमुखः च सचेतनौ जातौ।

'पूर्वघोषणानुगुणम् अहं राजकुमारीं श्रीमुखाय दातुं सिद्धः' इति उक्तवान् राजा।

श्रीमुखः एतत् निराकुर्वन् उक्तवान्– "पिशाचपीडा संन्यासिना निवारिता, न तु मया। अतः संन्यासी यथा वदति तथा आचरणम् उचितम्" इति।

राज्ञा पृष्टः संन्यासी उक्तवान्– "श्रीमुखः एव योग्यः वरः" इति।

एतत् श्रुत्वा श्रीमुखः लज्जया शिरः अवनमय्य– "श्रीमन्! मानवः सन् अपि पिशाचापेक्षया अहम् अधमः। मत्तः अधमः लोके अन्यः न स्यात्" इति उक्त्वा मौनं ततः निर्गतवान्।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! श्रीमुखः राजकुमारीं परिणेतुं किमर्थं सिद्धः न जातः? वस्तुतः तु सा परिणेतव्या इत्येव खलु आसीत् तस्य सङ्कल्पः? राजा तां दातुं सिद्धः अस्ति। संन्यासी सन्तोषेण एतत् अनुमतवान् अस्ति। तथापि श्रीमुखः आत्मानम् अधमाधमं वदन् किमर्थं ततः निर्गतवान्? किं तस्य बुद्धिभ्रंशः जातः? एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान्– "श्रीमुखः विवेकेन एव व्यवहृतवान्। किञ्चिच्चिन्तनेन एतत् ज्ञायते। कृतम् उपकारं विस्मृत्य यः व्यवहरति सः अधमाधमः एव। अविचिन्त्य कूपिकावरणम् अपसारयन् श्रीमुखः पिशाचस्य बन्धविमुक्तेः कारणं जातः। एतेन सन्तुष्टः पिशाचः प्रत्युपकाररूपेण निर्धनं तं भाग्यवन्तम् अकरोत्। किन्तु श्रीमुखः आशापिशाचग्रस्तः सन् राज्यस्य उत्तराधिकारी भवितुम् इच्छन् पिशाचस्य जागरूकतावचनम् उपेक्ष्य पिशाचं बद्धुं गतवान्। अतः पिशाचः कृतघ्नं तम् एव अगृह्णात्। रत्नगुप्तपुत्रीं श्रीवल्लीं परिणीतवान् सः राजकुमारीं परिणेतुं यत् इच्छति तत् धर्मविरुद्धम् अपि। एतत्सर्वं श्रीमुखेन अन्ते स्वयं ज्ञातम्। अतः सः राजकुमारीपरिणयस्य इच्छां परित्यज्य सज्जनः इव जीवितुम् इच्छन् ततः निर्गतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः बेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# व्यवहारबाह्यं नाणकम्

चन्द्रशेखरः चक्रपुरस्य राजा। मृगयाविहारे तस्य विशेषासक्तिः। कदाचित् सः मन्त्रिसेनापतिप्रभृतिभिः सह मृगयार्थम् अरण्यं गतवान्। मध्याह्नपर्यन्तं मृगयाकलापाः प्रवृत्ताः। प्रत्यागच्छतः महाराजस्य निमित्तम् अरण्यपार्श्वे शिबिरे भोजनव्यवस्था कल्पिता आसीत्।

राजा भोजनं समाप्य शासनप्रमुखैः सह उपविश्य मृगयाविशेषविषये वार्तालापं कुर्वन् आसीत्।

तदा कश्चन निर्धनः यात्रिकः राजसमीपम् आगत्य नमस्कृत्य किमपि दातव्यम् इति प्रार्थितवान्।

राजा एकं रजतनाणकं तस्मै दत्त्वा पुनरपि वार्तालापे मग्नः जातः। एकनिमेषाभ्यान्तरे सः यात्रिकः पुनः आगत्य– "प्रभो! व्यवहारबाह्यं नाणकं दत्तं भवता। एतत् प्रतिस्वीकृत्य अन्यत् नाणकं दातव्यम् इति प्रार्थये" इति उक्तवान्।

दत्तं तिरस्कुर्वन्तं तं निर्धनं दृष्ट्वा कुपितः राजा– "यत् दत्तं तत् स्वीकृत्य इतः गच्छतु भोः। अन्यत् किमपि न ददामि अहम्" इति उक्तवान्।

"एवं तर्हि एतत् नाणकं भवान् एव स्वसमीपे स्थापयतु कृपया" इति उक्तवान् निर्धनः।

क्रुद्धः राजा– "कियद्धाष्ट्यं भवतः? मया दत्तं मह्यं प्रत्यर्पयन् माम् अपमानयति? निर्गच्छतु इतः" इति गर्जितवान्।

तदा यात्रिकः विनयेन– "महाराज! क्षन्तव्यः अहम्। एतत् नाणकं भवान् प्रतिस्वीकरोति चेत् अहं बहुधा उपकृतः भविष्यामि। कृपया एतस्य प्रतिस्वीकरणं मा तिरस्करोतु" इति उक्त्वा नाणकं महाराजस्य

पादयोः समीपे स्थापयित्वा वेगेन ततः निर्गतवान्।

निर्धनस्य एतं व्यवहारं दृष्ट्वा मन्त्री, सेनापतयः च आश्चर्यचकिताः। गच्छन्तं तं दूतद्वारा स्वसमीपम् आनायितवान् राजा।

"अहम् एतस्य देशस्य राजा। भवान् मम प्रजाः। मया व्यवहारबाह्यं नाणकं दत्तं चेदपि मद्विषयकेण गौरवेण भवता तत् प्रतिवचनं विना स्वीकरणीयम् आसीत्। मया निषिध्यमानः अपि भवान् तत् प्रत्यर्पितवान्। एतेन अहम् उपकृतः भविष्यामि इति उक्तवान् च। एतस्य किं तात्पर्यम्?" इति पृष्टवान् राजा।

"प्रभो! एतत् नाणकम् अस्माकं देशे टङ्कशालायां खलु निर्मितम्?" इति पृष्टवान् निर्धनः।

एतत् श्रुत्वा असमाधानेन उक्तवान् सेनापतिः– "एषः विषयः शासनसम्बन्धी। एतद्विषये वयं चिन्तयिष्यामः। प्रथमं भवान् राज्ञः प्रश्नस्य योग्यम् उत्तरं ददातु" इति।

निर्धनः पुनरपि विनयेन उक्तवान्– "तत् नाणकं व्यवहारबाह्यम् इति अहं जानामि। तथापि क्षेप्तुं न अर्हामि। स्वसमीपे स्थापयितुम् अपि न शक्नोमि। यतः तत् यदा पश्यामि तदा मनसि भावना भवति यत् महाराजेन उत्तमं नाणकं दत्तं चेत् वरम् अभविष्यत् इति। एतस्याः व्यथातः आत्मनः रक्षणार्थम् अहं तत् नाणकं महाराजाय प्रत्यर्पितवान्। महाराजेन किमपि न दत्तम् इति भावयन् अल्पे काले एतां घटनां विस्मर्तुं शक्ष्यामि अहम्" इति।

"एषः निर्धनः चेदपि वचनेन आढ्यः एव। निर्दाक्षिण्यप्रवृत्तिः एतस्य श्रेष्ठतां द्योतयति" इति उक्तवान् मन्त्री।

राजा मन्दहासपूर्वकं स्वकण्ठे स्थितं रत्नहारं निर्धनस्य कण्ठे स्थापितवान्। "अद्य अत्रैव आतृप्ति भोजनं करोतु" इति तं सूचितवान् च।

एतदनन्तरं टङ्कशालायां स्थितः सः अप्रामाणिकः योग्येन दण्डेन दण्डितः जातः।



# चन्दमामानुबन्धः – ९

# ज्ञानभाण्डागारम्

एतन्मासीयम् ऐतिहासिकं व्यक्तित्वम् –



## हरिकिषन्

हरिकिषन् १६५६ तमे वत्सरे जुलैमासे सप्तमे दिनाङ्के जन्म प्राप्तवान्। एषः गुरोः हरिरायवर्यस्य कनिष्ठः पुत्रः। एतस्य वैशिष्ट्यं यत् एषः पञ्चमे वयसि एव सिक्खगुरुः जातः।

पञ्चवर्षीयः बालकः चेदपि एषः उत्तरदायित्वं सम्यक् निर्वहति स्म। सः स्वभावेन प्रशान्तः गम्भीरः च आसीत्। हरिकिषन्विषये बहवः अभियोगाः (Complaints) आगताः। इत्यतः मोघलचक्रवर्ती तं स्वकीयम् आस्थानम् आनायितवान्। अम्बरराजः जयसिंहः तं देहलीनगरम् आगन्तुं साननयम् उक्तवान्। देहलीनगरे सादरं सगौरवं च हरिकिषन् स्वागतीकृतः। किन्तु ततः निर्गमनात् पूर्वं दुर्दैववशात् सः मसूरिकारोगेण (Small-pox) पीडितः अभवत्। यदा तदीयाः अनुचराः ज्ञातवन्तः यत् एतस्य अन्तिमक्षणः सन्निहितः अस्ति इति, तदा ते रोदनं कृतवन्तः। तदा हरिकिषन् तान् बोधितवान् यत् रोदनं न करणीयम्, भगवन्नामसङ्कीर्तनं करणीयम् इति। १६६४ तमे वर्षे मार्चमासे ३० दिनाङ्के अष्टमवर्षसमाप्तितः पूर्वम् हरिकिषन् दिवंगतः।

## सः कः स्यात्?

संन्यासी कश्चित् कञ्चन यागं कुर्वन् आसीत्। यज्ञस्य अन्ते सः आत्मनः समग्रम् ऐश्वर्यं तत्र उपस्थितेभ्यः सर्वेभ्यः दातुम् आरब्धवान्। तस्य पुत्रः कथम् अपि एतां भावनां प्राप्तवान् यत् पित्रा अहम् अपि कस्मैचित् दातव्यः अस्मि इति। सः अल्पवयस्कः बालः पितरं पुनः पुनः पृष्टवान्– "तात! मां कस्मै ददाति भवान्?" इति। तदा यज्ञाङ्गभूतेषु कर्मसु व्यापृतः पिता कोपेन उक्तवान्– "यमाय ददामि भवन्तम्" इति। पुत्रः झटिति ततः मृत्युदेवतायाः यमस्य प्रासादं गतवान्। यमः प्रासादे न आसीत्। बालः दिनत्रयं यावत् निराहारं तस्य प्रतीक्षां कृतवान्। बालस्य सहनया सन्तुष्टः यमः बालाय त्रीन् वरान् दत्तवान्। बालः तु मृत्युरहस्यं ज्ञातुम् इच्छति स्म। मरणानन्तरम् आत्मनः गतिः का इत्यपि सः ज्ञातुम् इच्छति स्म। बालम् एतस्याः इच्छातः पराङ्मुखं कर्तुम् अशक्तः यमः मृत्युरहस्यम् आत्मतत्त्वं च बोधितवान्।

एतस्यां कथायां प्रस्तुतः सः बालः कः स्यात्?

(उत्तरम् अष्टमे पृष्ठे)

# विज्ञानविनोदः
# कन्दुकचमत्कारः

### एवं कुर्वन्तु –

धूलिनिवारकं यन्त्रं (Vacuum Cleaner) केशशोषकयन्त्रं (Hair Driyer) वा स्वीकुर्वन्तु। तत् यन्त्रम् उन्मुखं गृहीत्वा प्रवर्तयन्तु। इदानीं यन्त्रमुखात् निर्गतः वायुः छदिं स्पृशति खलु? वेगेन चलति वायुप्रवाहे एकं पिंगपांग् कन्दुकं स्थापयन्तु। यदि तत् न तिष्ठति तर्हि वायुप्रवाहे विभिन्नस्थले स्थापयन्तः प्रयत्नं कुर्वन्तु। युक्ते स्थाने स्थापितं कन्दुकं वायुप्रवाहे तिष्ठति।

### किं भवति? किमर्थं च भवति?

वायुप्रवाहे योग्ये औन्नत्ये स्थापितं कन्दुकं न पतति, अपि तु कम्पमानं सत् अतिवेगेन न्यूनतमे देशे इतस्ततः चलत् तिष्ठति। सूक्ष्मरूपेण परिशीलनेन ज्ञायते यत् कन्दुकं वायुप्रवाहस्य मध्यभागं प्रति निरन्तरम् आकृष्यमाणं भवति इति।

वायुप्रवाहस्य मध्यभागे चलनवेगः अधिकः। अतः वायुप्रवाहस्य प्रान्तभागे न्यूनं नोदनं मध्यभागे च अधिकं नोदनं भवति। अतः कन्दुकं मध्यभागं प्रति निरन्तरं नोद्यमानं भवति। वायुप्रवाहः तु स्वगमनेन कन्दुकम् उपरि एव स्थापयति। कन्दुकं परितः निरन्तरं वायुसञ्चारात्, अधस्तात् नोदनात् च कन्दुकस्थितौ प्रतिक्षणं परिवर्तनं दृश्यते। अतः एव कम्पनस्य भानम्।

एतदनन्तरं वायुना पूर्णं षडङ्गुलव्यासयुतं फूद्गं (Balloon) कन्दुकात् द्वादशाङ्गुलोपरि वायुप्रवाहे स्थापयन्तु। यदि फूद्गस्य भारः न्यूनः इति भासते तर्हि तस्य मूलभागे दंशिकाम् (Paper Clip) योजयन्तु। फूद्गः बृहदाकारकः चेत् नाणकं किमपि योजनीयं भवेत्।

अन्यविधं कन्दुकम् अपि एवंक्रमेण स्थापयितुं शक्यते किम्? परिशीलयन्तु। हस्तेन यन्त्रस्य मुखद्वारस्य पिधानं किञ्चित् किञ्चित् कुर्वन्तः भवन्ति चेत् अल्पे एव काले कन्दुकं, वायुपूर्णं फूद्गं च वायुप्रवाहात् च्युतं भवति ननु?



## विश्ववैचित्र्यम्

# पूर्वद्वीपस्थाः निगूढप्रतिमाः

दक्षिणफेसिफिक्समुद्रस्य तीरे पूर्वद्वीपेषु विभिन्नौन्नत्यवैशाल्ययुताः बह्व्यः प्रतिमाः सन्ति। तासु कासाञ्चित् औन्नत्यं ३ द्वादशाङ्गुलं चेत् अपरासां कासाञ्चित् औन्नत्यं ३६ द्वादशाङ्गुलम्। ६६ द्वादशाङ्गुलोन्नता मूर्तिः अपि अस्ति तत्र। कासाञ्चित् भारः ८० टन् भवेत्।

एताः प्रतिमाः ज्वालामुखस्य समीपे सन्ति। एताः प्रतिमाः एतं द्वीपं प्रति कथम् आगताः? कथं निर्मिताः? केन निर्मिताः? केन उद्देशेन निर्मिताः? इत्यादीनाम् उत्तरम् अद्यावधि न लब्धम्। शास्त्रज्ञाः एतद्विषये चिन्तयन्तः सन्ति।

# अपूर्वाः जागतिकघटनाः




# सिंहलदेशस्य उदयः

गौतमबुद्धस्य काले भारतस्य पूर्वभागे कस्मिंश्चित् देशे विजयसिंहः नाम कश्चन राजकुमारः आसीत्। सः सप्तशतेन अनुयायिभिः सह समुद्रप्रयाणम् आरब्धवान्। मार्गे तैः कश्चन द्वीपः प्राप्तः। एषः द्वीपः घनारण्येन उन्नतैः पर्वतैः च युक्तः आसीत्। तत्र बाह्यप्रपञ्चस्य सर्वथा अनभिज्ञाः जातिविशेषे जाताः केचन निवसन्ति स्म। विजयसिंहः तदनुयायिनः च तान् ततः निर्गमय्य अरण्यं प्रेषितवन्तः। तत्र विजयसिंहः स्वकीयं शासनम् आरब्धवान्। विजयसिंहस्य सहचराः केचन दक्षिणभारते स्थितं मधुरैनगरं गतवन्तः। तत्र पाण्ड्यराजं ते प्रार्थितवन्तः— "भवदीया पुत्री अस्माकं राज्ञी यथा स्यात् तथा विजयसिंहाय दातव्या" इति। ते एतदपि प्रार्थितवन्तः यत् विजयसिंहस्य सहचराणां विवाहनिमित्तं सप्तशतं कन्यकाः अपि प्रेषणीयाः इति। पाण्ड्यदेशस्य राजकुमारी सप्तशतेन सखीभिः सह द्वीपम् आगत्य विजयसिंहं परिणीय राज्ञीपदम् अलङ्कृतवती। तस्याः सखीः विजयसिंहसहचराः परिणीतवन्तः। विजयसिंहस्य कुलनाम्नः आधारेण तस्य द्वीपस्य नाम सिंहलम् इति प्रसिद्धम् अभवत्। चक्रवर्तिनः अशोकस्य पुत्रः महेन्द्रः सिंहलद्वीपम् आगत्य तत्रत्यान् बौद्धमतं बोधितवान्। अनन्तरकाले महेन्द्रस्य सहोदरी राज्ञी संघमित्रा तस्य बोधिवृक्षस्य शाखया सह तत्र गतवती, यस्य च वृक्षस्य अधः बुद्धः ज्ञानोदयं प्राप्तवान् आसीत्। सा च शाखा महावृक्षत्वम् आपन्ना। स च महावृक्षः तत्र अनुराधपुरे इदानीम् अपि द्रष्टुं शक्यः।

## भारतीये इतिहासे कटाक्षपातः



१. कः मुघलचक्रवर्ती नूतनं मतं प्रतिपादितवान्?

२. तस्य मतस्य नाम किम्?

३. तस्य पदस्य (नाम्नः) कः अर्थः?

४. तौ रजपूतनायकौ कौ यौ च चित्तूरुप्रदेशे अल्लावुद्दीनखिल्जिं सम्मुखीकृतवन्तौ?

५. सा इतिहासप्रसिद्धा राज्ञी का, या च ताभ्यां रक्ष्यमाणा आसीत्?

६. तयोः राज्यस्य नाम किम्?

७. पाण्डवैः निर्मितस्य नगरस्य नाम किम्?

८. तस्य प्रदेशस्य तत्पूर्वतनं नाम किम् आसीत्?

९. कौरवाः यत्र वसतिं कृतवन्तः तस्य नगरस्य नाम किम्?

१०. ते नगरे कस्मिन् प्रदेशे आस्ताम्?

(उत्तराणि अष्टमे पृष्ठे)

## वस्तुस्थितेः वैज्ञानिकान्वेषणस्य संशोधनस्य च प्रपञ्चः

१. येसुक्रिस्तः कया भाषया वदति स्म?

२. कः राजा शिक्षकः सन् जीवनं यापितवान्?

३. कः जन्तुः नीलगिरिवृक्षस्य पर्णानाम् आधारेण जीवति?

४. एतावता निर्मितेषु अतिविशालः शवस्तूपः (Tomb) कः?

५. कः जन्मानन्तरम् अष्टसप्ताहाभ्यन्तरे स्वमातृभाषया निरर्गलं वदति स्म?

६. किं सस्यं मण्डूकं खादितुं शक्नोति?

७. कोषकीटः (Silkworm) कियद्दीर्घं तन्तुं निर्मातुं शक्नोति?

८. जगति एव बृहदाकारिका घण्टा कुत्र दृष्टा?

९. कः पक्षी सुदीर्घकालं जीवति?

१०. सूर्यगोलस्य अन्तर्भागे स्थितस्य तापस्य किं मानम्?

(उत्तराणि अष्टमे पृष्ठे)




१. महाभारतग्रन्थे कथायाः निरूपकः कः?

२. कुत्र एषा कथा तेन निरूपिता?

३. कस्मिन् सन्दर्भे एषा कथा निरूपिता?

४. सः निरूपकः कस्मात् एतां कथां श्रुतवान् आसीत्?

५. इदानीम् उपलभ्यमाने महाभारते कति अध्यायाः सन्ति?

६. मूलभूते ग्रन्थे वस्तुतः कति अध्यायाः आसन्?

७. महाभारतयुद्धं कति दिनानि यावत् प्रवृत्तम्?

८. जगति एव अतिदीर्घः महाग्रन्थः कः?

९. कः एतं ग्रन्थं लिखितवान्?

१०. व्यासस्य पूर्णं नाम किम्?

(उत्तराणि अष्टमे पृष्ठे)

## जानीम एकं शब्दं प्रमुखासु भारतीयभाषासु

**– पश्चिमा/प्रतीची –**

**अस्सामी**-पश्चिम, **बङ्गाली**-पश्चिम, **इंग्लीष्**-वेस्ट्, **गुजराती**-पश्चिम, **हिन्दी**–पश्चिम, **कन्नड**-पश्चिम, **काश्मीरी**-मग्रिब, **मलयालम्**-पतैरु, **मराठी**-पश्चिम, **ओडिया**-पश्चिम, **सिन्धि**-औल्हु, **पञ्जाबी**-पच्चम, **तमिळु**-मेर्कु, **तेलुगु**-पद्मर, **उर्दु**-मग्रिब।

## अपि भवान् विश्वसिति?

* यत् सर्वविधाः अपि शुनकाः भषन्ति इति?
* यत् लशुनं पलाण्डुजातीयम् इति?
* यत् अश्वाः इदानीं येन आकारेण दृश्यन्ते तथैव पूर्वम् अपि आसन् इति?

## न तथा

* पश्चिम-आफ्रिकादेशीयः कांगो बुशुजातीयः शुनकः न भषति।
* लशुनं वस्तुतः कुमुदकुलसम्बन्धि।
* प्राक्पौराणिककालीनानां दक्षिण-अमेरिकादेशीयानाम् अश्वानाम् औन्नत्यं शुनकस्य यावद् औन्नत्यम् इदानीं भवति तावत् भवति स्म।

# उत्तराणि

### सः कः स्यात्?

नचिकेताः।

### इतिहासः

१. अकबरः।

२. दिन्-इ-इलाहि।

३. दैवी विश्वासः इति।

४. गोरा, बादल् च।

५. राज्ञी पद्मिनी।

६. मेवाडदेशः।

७. इन्द्रप्रस्थः।

८. खाण्डववनम् इति।एतत् अरण्यम् आसीत्।

९. हस्तिनापुरम्।

१०. देहलीनगरस्य समीपे।

### विज्ञानादयः

१. अरामिक्भाषया।

२. लूयिस् फिलिप्स्। (१७७३-१८५०) एषः फ्रेञ्च्-राज्यपरिवृत्तिसमये स्विझरल्याण्ड् प्रति पलायितवान्। तत्र नामान्तरेण आत्मानं परिचाययन् शालायां गणितं पाठितवान्।

३. आस्ट्रेलियादेशस्य कौलाजन्तुः।

४. कैरोसमीपस्थः च्योप्सम्बन्धि शङ्कुगृहम्।

५. जर्मनीदेशीयः लुबेक्निवासी क्रिस्चियन् फेड्रिक् हेनक्केन्।

६. कोस्टल् कैरोलिना प्रदेशस्य वेनुसुनामकं जन्तुभक्षकं सस्यम्। एतस्य पत्रपुटं प्रविष्टः कोऽपि लघुजन्तुः ततः विमोचनं प्राप्तुं न शक्नोति।

७. स्वस्य आकारस्य द्वादशसहस्रगुणितं दीर्घं तन्तुं निर्माति। एतस्य आकारस्तु त्र्यङ्गुलात् अधिकं न भवति।

८. मास्कोनगरे क्रेम्लिन् समीपे। एतस्य औन्नत्यं १९ द्वादशाङ्गुलं, भारश्च १९८ टन् मितम्। किन्तु एषा घण्टा कदापि न उत्तोलिता, न वा, वादिता।

९. फाल्कन्पक्षी। एतज्जातीयेषु केचन १५० वर्षाणि जीवन्ति।

१०. ४०,०००,००० डिग्री फेरनहीट्।

### साहित्यम्

१. मुनिः सूतः।

२. नैमिषारण्ये शौनकमुनेः आश्रमे।

३. शौनकेन कृतस्य यज्ञस्य समाप्तेः सन्दर्भे।

४. वैशम्पायनमुनेः मुखात्।

५. लक्षम् अध्यायाः।

६. चतुर्विंशतिसहस्रम् अध्यायाः।

७. अष्टादश दिनानि।

८. महाभारतम्। होमरकवेः इलियड्ग्रन्थः ओडिस्सिग्रन्थः च योजितः चेत् यावत् भवेत् ततोऽपि अष्टगुणितं महत्त्वं महाभारतस्य।

९. गणेशः। रचयिता (कविः) व्यासः कथाम् उक्तवान्।

१०. कृष्णद्वैपायनः व्यासः इति।




# नेहरूकथा – ५

१९२० तमे वत्सरे जवहरस्य मातुः पत्न्याः च आरोग्यं विषमतां गतम्। सः मात्रा पत्न्या च सह मुस्सूरु गतवान्। यस्मिन् वसतिगृहे तेन स्थितं तत्र केचन अपघनजनाः अपि आसन्। अपघनजनाः आंग्लविरोधिनः। अतः 'अपघनजनैः सह वार्तालापं न करिष्यामि' इति वचनं ददातु इति जवहरम् उक्तवान् कश्चन आंग्लेयः न्यायाधिकारी।

अपघनजनैः सह वार्तालापस्य आवश्यकता काऽपि न आसीत् जवहरस्य। तथापि सः तथा वचनदानं सर्वथा निराकृतवान्। एतस्य परिणामतः 'डेहराडूननगरं परित्यज्य गन्तव्यं भवता' इति आज्ञा प्राप्ता तेन। जवहरः पत्नीं मातरं च तत्रैव परित्यज्य अलहाबादनगरं गतवान्। तत्र सः कदाचित् कृषिकाणां शोभायात्रां दृष्टवान्।





प्रतापगढमण्डलस्य ग्रामवासिनः जनाः स्वकष्टपरम्परां नागरिकान् निवेदयितुं तत्र आगताः आसन्। ते जवहरं दृष्ट्वा साग्रहं प्रार्थितवन्तः यत् भवता अस्मत्प्रदेशम् आगत्य ग्रामीणानां कष्टपरम्परा स्वयं द्रष्टव्या इति।

जवहरलालः ऐदम्प्राथम्येन ग्रामेषु सञ्चरन् ग्रामीणजनानां जीवनस्य विविधानि मुखानि, तेषां समस्याः, ग्रामेषु प्रचलन्तं दुराचारं च प्रत्यक्षं दृष्टवान्। कृषिकाः परिश्रमेण कार्यं कुर्वन्ति स्म। तस्य दुरुपयोगं स्वीकुर्वन्ति स्म धनिकाः।





१९२१ तमे वर्षे जनवरीमासे केचन कृषिकनायकाः कारागारे स्थापिताः। तेषां विमोचनं सम्पादयितुं सहस्रशः कृषिकाः उद्युक्ताः जाताः। तेषां दर्शनार्थं प्रस्थितवान् जवहरः। मध्येमार्गं सेतुसमीपे आरक्षकाः जवहरस्य गमनं बलात् निरुद्धवन्तः।

यदि जवहरस्य गमनं अनुमतं भवेत् तर्हि सः सौहार्दयुतेन वार्तालापेन कृषिकाणां कोपोपशमनम् अकरिष्यत्। किन्तु अविवेकेन व्यवहरन्तः आरक्षकाः तं निरुद्धवन्तः इत्यतः कृषिकाः क्रुद्धाः। महान् कोलाहलः आरब्धः। कोलाहलशमनार्थम् आरक्षकाः गोलकास्त्रप्रयोगं कृतवन्तः। एतेन बहवः मृताः।



आवेशेन वशीकृताः कृषिकाः कस्यचित् धनिकस्य गृहं लुण्ठितवन्तः। तस्य धनिकस्य शत्रवः केचन 'गान्धीजिना एवं कर्तुं सूचितम् अस्ति' इति वदन्तः तान् कृषिकान् प्रेरितवन्तः आसन्। निष्कपटाः कृषिकाः तेषु वचनेषु विश्वस्य 'गान्धीमहात्मा जयतात्' इति वदन्तः धनिकगृहं लुण्ठितवन्तः आसन्।





एषा वार्ता जवहरेण श्रुता। स तु नितरां खिन्नः, कुपितः च। एतादृश्यः घटनाः कांग्रेस् संस्थायाः नाम मलिनीकुर्वन्ति इति आलोच्य सः ग्रामं गतवान्। सभाम् आयोजितवान् च। तस्य भाषणं श्रोतुं सहस्रशः ग्रामीणाः उपस्थिताः आसन्।

कृषिकैः यत् कृतं तत् निन्दायोग्यम् अपमानकरं च इति सः उद्घोषितवान्। 'ये धनिकस्य गृहं लुण्ठितवन्तः ते मया द्रष्टव्याः। अतः ते प्रामाणिकबुद्ध्या हस्तम् उन्नयेयुः' इति आदिष्टवान् सः। तदा आरक्षकाः उपस्थिताः सन्ति इति एतम् अंशम् अपि उपेक्ष्य चतुर्विंशतिः कृषिकाः हस्तम् उन्नीतवनतः।





एतां घटनां व्याजीकृत्य आरक्षकाः तत्र उपस्थितान्, तेषां बन्धुमित्राणि च कारागारे स्थापितवन्तः। एवं सहस्राधिकाः जनाः कारागारे स्थापिताः। एकं वर्षं यावत् न्यायालये विचारणा प्रवृत्ता। बहवः सुदीर्घकारागारवासेन दण्डिताः अभवन्।

'मम कारणतः बहवः निरपराधिनः ग्रामवासिनः कारागारवासेन दण्डिताः अभवन् खलु?' इति खेदम् अनुभवति जवहरः। एतया घटनया ग्रामीणानां प्रामाणिकता, धैर्यं, निष्कल्मषं प्रेम च जवहरेण सम्यक् ज्ञातम्।





इतः पूर्वं कृषिकाणाम् एतादृशी सभा जवहरेण न दृष्टा आसीत्। न श्रुता आसीत् अपि। एतस्याः घटनायाः अनन्तरं कृषिकाणां साहाय्यार्थं सर्वकारेण नूतनाः नियमाः कृताः। एतदनन्तरं धनिकाः पूर्ववत् सुलभतया कृषिकान् पीडयितुं न शक्नुवन्ति स्म।

–(अनुवर्तते)



# अपूर्वाणि वस्तूनि

रामपुरे शेखरो नाम कश्चन तरुणः निवसति स्म। बाल्यतः अपि विद्याभ्यासे तस्य रुचिः नास्ति। ग्रामे वृथा अटन् सः दिनानि यापयति।

तस्य मातुः सदा अस्वास्थ्यम्। अनुजा काचित् प्राप्तवयस्का अस्ति। तथापि शेखरः निर्लिप्तः इव व्यवहरति। पिता एव समग्रस्य कुटुम्बस्य भारं निर्वहति।

दुर्दैववशात् शेखरस्य पिता घोरेण व्याधिना ग्रस्तः जातः। अल्पे एव काले प्राणान् त्यक्तवान् च। इदानीं समग्रस्य कुटुम्बस्य निर्वहणं शेखरेण करणीयम्। पित्रा यत् सम्पादितम् आसीत् तत् मासद्वयाभ्यन्तरे समाप्तम् अभवत्।

कदाचित् माता भोजनं परिवेषयन्ती शेखरम् उक्तवती— "वत्स! भवतः अनुजायाः निमित्तं शीघ्रम् एव योग्यस्य वरस्य अन्वेषणं करोतु। अहं तु कियत्कालं जीवामि इति न जानामि" इति।

एतस्य कुटुम्बभारस्य निर्वहणं मया सर्वथा न शक्यते इति आलोचितवान् शेखरः। जीवनात् सः जुगुप्सितः जातः। अतः अमावास्यायां रात्रौ सः मौनम् उत्थाय गृहात् निर्गत्य अरण्यं प्रविष्टवान्।

शिरः अवनमय्य अरण्ये गच्छन् आसीत् सः। तावता— "भोः, कः सः? अत्र आगच्छतु। महति कष्टे पतितः इव लक्ष्यते खलु भवान्? किं कष्टम्? आगच्छतु अत्र" इति कश्चन ध्वनिः तम् आह्वयत्।

शेखरः परिवृत्य दृष्टवान्। काचित् पिशाची समीपे एव शिलाराशेः उपरि उपविष्टा आसीत्। मरणार्थं सिद्धस्य शेखरस्य पिशाचदर्शनात् का भीतिः? सः पिशाचसमीपं गत्वा स्वकीयं कष्टं समग्रं



निवेदितवान्।

पिशाची अश्रूणि स्रावयन्ती गद्गदस्वरेण– "कष्टपर्वतम् एव वहन् भवान् इतोऽपि जीवति इत्येतत् एव आश्चर्यकरम्!" इति उद्गारं प्रकटितवती।

"प्राणाः न निर्गताः इत्यतः अहं जीवामि, तावदेव" इति खेदेन उक्तवान् शेखरः।

"एतादृशेन जीवनेन किमपि प्रयोजनं नास्ति खलु? समीपे एव श्मशाने जीर्णकूपः अस्ति। तत्र पतनेन प्राणान् त्यजतु। मम योग्यः सहचरः भवितुम् अर्हति भवान्" इति उक्त्वा शेखरस्य हस्तं गृहीत्वा ततः प्रस्थितवती पिशाची।

'पिशाच्याः सूचना युक्ता एव' इति चिन्तितवान् शेखरः। पिशाच्या सह गतः सः कूपे पतितुम् उद्युक्तः अभवत्।

"कः सः? मध्यरात्रे किं कार्यम् अत्र?" इति वदन्ती काचित् वृद्धा पिशाची कूपात् उद्गता।

शेखरः स्वकीयं कष्टं समग्रं तां वृद्धपिशाचीं निवेदितवान्। "हा हन्त! कष्टसागरे पतितः अस्ति खलु भवान्? हृदयं विद्रावयति भवतः दुर्गतिः" इति अनुकम्पया उक्तवती वृद्धपिशाची।

तदा तरुणी पिशाची उक्तवती– "अतः एव खलु अहम् एतस्य साहाय्यं कर्तुम् अत्र आनीतवती" इति।

"अलं भवत्याः साहाय्येन। निर्गच्छतु इतः" इति वदन्ती वृद्धपिशाची तां तरुणपिशाचीं ततः दूरं प्रोषितवती।

"तां किमर्थं निन्दति भवती? स्वमत्यनुगुणं मार्गः उपदिष्टः तया" इति उक्तवान् शेखरः।

वृद्धपिशाची शेखरं परीक्षादृष्ट्या दृष्ट्वा– "इदानीम् अहं भवन्तं कुत्रचित् नेष्यामि। तत्र यत् प्रचलति तत् जागरूकतया पश्यतु। अनन्तरं यथा इच्छति तथा करोतु" इति उक्त्वा श्मशानस्य अपरं पार्श्वं प्रति अनयत्।

तत्र जीर्णं शवस्थानं परितः केचन पिशाचाः उपविष्टवन्तः आसन्। एषा वृद्धपिशाची गुल्मस्य पृष्ठतः शेखरम्



उपवेश्य स्वयं पिशाचसमूहं प्रविष्टवती।

अल्पे एव काले महान्तम् अट्टहासं प्रकटयन् पिशाचनायकः आगत्य शवस्थानस्य उपरि उपाविशत्। सर्वे पिशाचाः सन्तोषेण करताडनं कृतवन्तः। अनन्तरं पिशाचनायकः अवदत्– "प्रियसहचराः! किमर्थं विलम्बः? मासात्मके अवधौ भवद्भिः सङ्गृहीतानि अपूर्वाणि वस्तूनि प्रदर्शयन्तु। एवं प्रदर्शितेषु अत्युत्तमस्य निमित्तं वर्षान्त्ये पारितोषिकं दीयते इति स्मरन्तु" इति।

तदा एकः पिशाचः रिक्तं कण्डोलं शिलायाः उपरि अधोमुखम् अस्थापयत्। लघुना दण्डेन त्रिवारं कण्डोलं ताडयन् "शाकाः, शाकाः" इति अवदत् च। तदा तत्र शाकराशिः एव प्रत्यक्षः जातः। "साधु! साधु!" इति सर्वे पिशाचाः सन्तोषं प्रकटितवन्तः।

गुल्मस्य पृष्ठतः स्थित्वा एतत्सर्वं दृष्टवान् शेखरः अचिन्तयत्– 'एतादृशः कण्डोलः यदि मम समीपे स्यात् तर्हि मम दारिद्र्यम् अपगतं भवेत्' इति।

एतदनन्तरम् अपरः पिशाचः लोहमयीं स्थालीं शिलायाः उपरि स्थापयित्वा "पाकः, पाकः" इति अवदत्। दण्डेन पात्रं त्रिवारम् अताडयत् च। पात्रं यदा उत्तानं कृतं तदा पात्रे विविधानि भक्ष्याणि!

'कण्डोलापेक्षया एतत् पात्रम् एव वरम्' इति चिन्तितवान् शेखरः।

तृतीयः पिशाचः एकं घटं शवस्थानस्य उपरि स्थापयित्वा– "क्षीरं, समीचीनं क्षीरम् आवश्यकम्" इति वदन् दण्डेन घटम् अभिमन्त्रितम् अकरोत्। अपरक्षणे पात्रे क्षीरं दृष्टम्! 'एषः घटः मम समीपे यदि भवेत् तर्हि यथेष्टम् ऐश्वर्यं सम्पादयेयम्' इति आलोचितवान् शेखरः।

तावता पिशाचनायकः उत्थाय– "साधु साधु! मम सहचराणाम् एतादृशी विशिष्टा शक्तिः अस्ति इति तु महते सन्तोषाय। अग्रिमे अमावास्यादिने पुनः मेलिष्यामः। पूर्वतनानि वस्तूनि यत्र स्थापितानि तत्रैव एतानि अपि स्थापयन्तु" इति उक्तवान्। पिशाचाः तानि वस्तूनि समीपस्थस्य

वटवृक्षस्य कोटरे पातितवन्तः। अनन्तर कोलाहलं कुर्वन्तः सर्वे ततः निर्गतवन्तः।

शेखरः वटवृक्षस्य समीपं गत्वा कोटरस्थं घटं, कण्डोलं, स्थालीं च बहिः आनीतवान्। तदनन्तरं कोटरस्थं वेणुं, शूर्पं, वेत्रं, पादरक्षां, घण्टां च बहिः आनीतवान्।

एतानि वस्तूनि कथं गृहं नेतव्यानि इति चिन्तनं यावत् आरब्धं तावता कोटरतले एका गोणी दृष्टा। शेखरः तां गोणीं बहिः आनीय तानि वस्तूनि गोण्यां पातितवान्। लतया गोणीमुखं बद्धवान्। अनन्तरं बलेन यावत् गोणीम् उन्नीतवान् तावता गोणी सर्वथा रिक्ता इव अनुभवः जातः। एतेन शेखरः अधोमुखं पतितवान्। गोणी तत्क्षणे अदृश्यतां गता।

शेखरः दिग्भ्रान्तः इव इतस्ततः पश्यति। तावता तत्र आगता वृद्धपिशाची अवदत्– "प्रवृत्तं सर्वं दृष्टं मया। मया भवान् यदा प्रथमं दृष्टः तदा निराशापिशाच्या ग्रस्तः आसीत्। 'आशां पूरयित्वा आत्महत्याप्रयत्नतः भवान् निवारणीयः' इति उद्देशेन अहं भवन्तम् अत्र आनीतवती। निराशया भवान् त्यक्तः चेत् अपि दुराशापिशाच्या ग्रस्तः अभवत्। अत्याशया सर्वाणि अपि प्राप्तुम् उद्युक्तः भवान् एकम् अपि न प्राप्तवान्" इति।

"सर्वथा वञ्चितः अभवम्। इदानीं किं करोमि पिशाचाम्ब!" इति खेदेन पृष्टवान् शेखरः।

"भोः! मानवः यदि इच्छति तर्हि सर्वम् अपि साधयितुम् अर्हति। किं भवान् शाकान् वर्धयितुं न अर्हति? रुचिकरं पाकं कर्तुं न अर्हति? गोपालनं कर्तुं न शक्नोति? चिन्तयतु। इच्छा अस्ति चेत् जीवनार्थम् अनन्ताः मार्गाः दृश्यन्ते! दैववशात् प्राप्तं मानवजन्म सार्थकं करोतु। मूढ! उषःकालः आसन्नः। गच्छतु इतः। परिश्रमं कुर्वन् सुखेन जीवतु" इति उक्त्वा वृद्धपिशाची अदृश्यतां गतवती।

विवेकं प्राप्य शेखरः उत्साहेन गृहं प्रति प्रस्थितवान्।






नरकासुरस्य संहारानन्तरम् अमरावतीम् आगतः कृष्णः इन्द्रशचीदेवीभ्यां सह किञ्चित्कालं वार्तालापं कृत्वा अनन्तरं ताभ्यां, सत्यभामया च सह अदितिदेवीं द्रष्टुं गतवान्। अदितिदेवी चिन्तामुद्रया उपविष्टवती आसीत्। सर्वे तां नमस्कृतवन्तः।

इन्द्रः तस्यै कुण्डलद्वयं समर्प्य नरकासुरसंहारः कृष्णेन कथं कृतः इति विस्तरेण निवेदितवान्।

कुण्डलप्राप्त्या नितरां सन्तुष्टा अदितिदेवी– "वत्स! पराक्रमातिशयेन भवान् सर्वेषां कष्टं दूरीकृतवान्। भवतः जन्म सार्थकं जातम्। इतः परम् अपि इन्द्रादीनां साहाय्यं कुर्वन् लोकरक्षणभारं निर्वहतु। भूलोके भवन्तं पराजेतुं कोऽपि न शक्नोति। सत्यभामासदृशी अन्या स्त्री लोके सर्वथा नास्ति। यावत् भवान् मानवरूपेण भूलोके तिष्ठति तावत् एषा सत्यभामा यौवनवती एव भवति" इति कृष्णम् उक्त्वा तं सत्यभामां चापि आशिषा अनुगृहीतवती।

अनन्तरं कृष्णः अदितिदेव्याः इन्द्रस्य च अनुज्ञां प्राप्य ततः निर्गत्य सत्यभामया सह गरुडम् आरुह्य स्वर्गलोकस्य वैशिष्ट्यं द्रष्टुं प्रस्थितवान्।

अमृतरक्षणालयः दृष्टः तेन। देवोद्याने नन्दनवने स्वेच्छया विहारः कृतः। अनन्तरं तौ कल्पवृक्षोद्यानं गतवन्तौ। तच्च उद्यानं सुगन्धपूर्णम् आसीत्। मकरन्दं प्राप्तुम् आगताः भ्रमराः पुष्पात् पुष्पं गच्छन्तः



गुञ्जन्तः आसन्। वृक्षशाखासु आन्दोलिकां बद्ध्वा क्रीडन्त्यः आसन् देवकन्याः। लोकेषु निरन्तरम् अटित्वा श्रान्तानि सिद्धमिथुनानि कल्पवृक्षच्छायायाम् उपविश्य विश्रान्तिसुखम् अनुभवन्ति स्म।

कल्पवृक्षाणां मध्ये परमरमणीयः पारिजातवृक्षः विराजते स्म। पारिजातवृक्षं देवाः परमपवित्रं भावयन्ति स्म। शचीदेव्याः प्रीतिपात्रं-सः वृक्षः। तस्य वृक्षस्य कीर्तिः त्रिषु लोकेषु प्रसिद्धम् अस्ति। तस्य वृक्षस्य समीपं ये गच्छन्ति ते देशप्रेम्णा उत्साहेन च प्रेरिताः भवन्ति स्म। अतः तं वृक्षं 'शक्तिवृक्षं' कथयन्ति स्म केचन।

एतस्य वृक्षस्य दर्शनमात्रेण सत्यभामा आत्मानं विस्मृतवती। सा इदानीम् आत्मानं देवतास्त्रीषु अग्रगण्यां मन्यते।

आनन्दातिरेकेण सा कृष्णं पश्यन्ती– "एषः वृक्षः मह्यम् आवश्यकः" इति उक्तवती। एतेन विना अहम् इतः न गच्छामि' इत्यापि सा सूचितवती।

कृष्णः अनुक्षणम् एव तं वृक्षं समूलम् उत्पाट्य गरुडस्य उपरि आरोपितवान्।

एतत् दृष्ट्वा धावन्तः आगताः उद्यानपालकाः आयुधानि उन्नीय 'एवं पारिजातवृक्षः न नेतव्यः' इति उक्तवन्तः। कृष्णस्य गरुडस्य च उपरि बाणप्रयोगं कृतवन्तः चापि। कृष्णः अपि बाणप्रयोगं कुर्वन् लीलया तान् पराजितवान्।

एषा वार्ता इन्द्रेण श्रुता। कृष्णः त्रिलोकीरक्षकः इति सः जानाति। तादृशेन पारिजातवृक्षः नीतः चेत् न अपराधः इति तु सत्यम् एव। तथापि यजमानस्य अनुमतिम् अप्राप्य नयनं नियमविरुद्धं खलु? एतत् अहं सहे चेत् तत् मम सामर्थ्यस्य अगौरवकरम् इति आलोच्य इन्द्रः देवगणेन सह प्रस्थाय कृष्णस्य उपरि वज्रायुधं प्रयुक्तवान्। कृष्णः स्वकीयेन आयुधेन तत् वज्रायुधं शक्तिहीनं कृतवान्। एतेन इन्द्रः शक्तिहीनः जातः। सः विनयेन कृष्णं नमस्कृत्य 'यावत् भवान् भूलोके स्थास्यति तावत् पारिजातवृक्षः भूलोके तिष्ठतु' इति उक्त्वा प्रतिगतवान्। कृष्णः पारिजातवृक्षेण सह द्वारकां गतवान्। कृष्णस्य अनन्तरं कल्पवृक्षः देवलोकं गतः

चेदपि तस्य बीजानां द्वारा अत्र परिजातसन्ततिः अनुवृत्ता एव।

कृष्णं, सत्यभामां, पारिजातवृक्षं च आनीय आगतः गरुडः द्वारकायाः कृष्णभवनस्य उपरि वलयाकारेण उड्डयनं कुर्वन् स्थितवान्। कृष्णः पाञ्चजन्यशङ्खस्य ध्वनिना स्वकीयम् आगमनं सूचितवान्। सर्वे सन्तोषेण गृहात् बहिः आगत्य कृष्णम् आदरेण स्वागतीकृतवन्तः।

कृष्णः गरुडात् अवतीर्य ज्येष्ठान् गौरवेण नमस्कृत्य कनिष्ठान् प्रीत्या आलिङ्गितवान्, योगक्षेमं पृष्टवान् च।

पारिजातवृक्षं दृष्टवतां द्वारकावासिनां सर्वेषां सन्तोषः एव। पारिजातवृक्षस्य परिमलः सर्वत्र व्याप्त. अस्ति। प्रद्युम्नः एकं पारिजातं अन्तःपुरोद्यानं नीतवान्। तस्य समीपम् आगताः सर्वेऽपि पूर्वजन्मनः स्मरणं प्राप्नुवन्ति स्म।

वृक्षस्य एतादृशं माहात्म्यं दृष्ट्वा सर्वे आश्चर्यचकिताः अभवन्। अनन्तरं योग्ये स्थले तस्य प्रतिष्ठापनं जातम्।

नरकासुरस्य कारागारे स्थिताः सर्वाः स्त्रियः द्वारकाम् आगतवत्यः। तासाम् अपेक्षानुगुणं कृष्णः ताः परिणीतवान्। अनन्तरं सः गरुडं योग्यया रीत्या सत्कृत्य देवलोकं प्रति गमनार्थम् अनुज्ञां दत्तवान्। 'यदा भवान् मां स्मरिष्यति तदा अहम् भवत्समीपे उपस्थितः भविष्यामि' इति



उक्त्वा गरुडः ततः निर्गतवान्।

अनन्तरं कृष्णः महासभाम् आयोज्य प्राग्ज्योतिषपुरात् आनीते ऐश्वर्ये कञ्चन भागम् उग्रसेनाय, कञ्चन भागं तस्य पत्न्यै, कञ्चन भागं बन्धुभ्यः दत्त्वा शिष्टं कोषगारं प्रापितवान्।

सत्यभामा पारिजातपुष्पैः आत्मानम् अलङ्कृत्य सपत्नीभ्यः अपि तानि पुष्पाणि यच्छति स्म।

कृष्णेन पारिजातवृक्षः भूलोकं नीतः आसीत् इत्यतः शचीदेवी पारिजातपुष्पैः आत्मानम् अलङ्कर्तुं न शक्नोति। तत्कारणतः सा व्यथाम् अनुभवति। खिन्नमनस्कां तां करुणया पश्यति देवेन्द्रः।

कदाचित् दुर्योधनः हस्तिनापुरे कञ्चन



विशिष्टं यागं कर्तुम् उद्युक्तः। सः अनेकान् राज्ञः एतदर्थम् आहूतवान्। यागः यथाविधि प्रवृत्तः। यागार्थम् आगताः बहवः राजानः कृष्णस्य कार्याणि, द्वारकायाः वैभवं च श्रुतवन्तः आसन्। अतः ते वार्तां प्रेषितवन्तः यत् वयं द्वारकां द्रष्टुम् आगन्तुम् इच्छामः इति।

"भवन्तः सर्वे अवश्यं द्वारकाम् आगच्छेयुः। भवतां सहार्दं स्वागतम्" इति दूतद्वारा वार्तां प्रेषितवान् कृष्णः।

धृतराष्ट्रस्य शतं पुत्राः, सामन्तराजाः, पाण्डवाः च अष्टादशाक्षौहिणीसेनया सह प्रस्थाय रैवतकपर्वतमूले विस्तृते प्रदेशे शिबिरं कल्पितवन्तः।

कृष्णः बलराम-सात्यकिप्रभृतिभिः, प्रद्युम्नप्रभृतिभिः कुमारैः, महत्या सेनया च सह आगत्य तान् स्वागतीकृतवान्। अनन्तरं सर्वान् अपि वस्त्रादिदानेन सत्कृत्य– "माम् अपि भवदीयम् एव भावयन्तु। यद्यत् आवश्यकं तत्सर्वं निस्सङ्कोचं पृच्छन्तु" इति उक्त्वा योग्याम् उपचारव्यवस्थां कल्पितवान्। सर्वे कृष्णस्य सत्कारेण तुष्टाः ततः निर्गतवन्तः।

एतदनन्तरं कदाचित् अर्जुनः अग्रजस्य धर्मराजस्य अनुमतिं प्राप्य कृष्णस्य दर्शनेच्छया द्वारकाम् आगत्य कानिचन दिनानि स्थितवान्। तत्समये कृष्णः कञ्चन यज्ञं प्रारब्धवान्।

यज्ञसमये ग्रामीणः कश्चन ब्राह्मणः यागभूमिम् आगत्य यज्ञदीक्षया दीक्षितं कृष्णं दैन्येन प्रार्थितवान्– "श्रीमन्! एतावता मम पत्नी त्रीणि अपत्यानि प्रसूतवती। प्रसवसमनन्तरम् एव अपत्यं कश्चित् अपहरति। इदानीं चतुर्थवारं मम पत्नी गर्भवती अस्ति। प्रसवकालः आसन्नः अस्ति अपि। इदानीं भवान् एव शरणं मम। मम अपत्यं कृपया रक्षतु" इति।

तदा कृष्णः– "यः साहाय्यं प्रार्थयति तस्य साहाय्यकरणं मम आद्यं कर्तव्यम्। किन्तु अहम् इदानीं दीक्षाबद्धः अस्मि। अतः कुत्रापि गन्तुं न अर्हामि। इदानीम् असहायः अस्मि अहम्" इति उक्तवान्।

एतत् श्रुत्वा पार्श्वे एव स्थितः अर्जुनः

उक्तवान्– "तदर्थं किमर्थं चिन्ता? अहम् अस्मि खलु? मां प्रेषयतु। एतस्य आपदं निवार्य प्रत्यागमिष्यामि" इति।

"एतत् कार्यं भवता साधयितुं शक्यं वा?" इति मन्दहासपूर्वकं पृष्टवान् कृष्णः।

एतेन अपमानितः अर्जुनः शिरः अवनमय्य मौनं स्थितवान्।

तदा कृष्णः उक्तवान्– "खेदः मास्तु अर्जुन! बलरामं, प्रद्युम्नं, सात्यकिं, यादववीरान्, सेनां च आत्मना सह नयतु" इति।

एतदनुगुणम् अर्जुनः रथम् आरुह्य ब्राह्मणेन प्रदर्शितेन मार्गेण तं ग्रामं गतवान्। यादवसेना बलरामादयः च तम् अनुसृतवन्तः।

प्रयाणसमये शृगालाः ध्वनिं कृतवन्तः। आकाशे स्थितः सूर्यः क्षीणकान्तिः जातः। आकाशतः उल्का सशब्दं भूमौ पतिता। सर्वे ब्राह्मणस्य गृहं प्राप्तवन्तः।

तस्मिन् एव समये ब्राह्मणपत्न्याः प्रसववेदना आरब्धा। ब्राह्मणगृहतः आगताम् एतां वार्तां श्रुत्वा अर्जुनादयः धनुर्बाणादिकं सज्जीकृत्य गृहं परितः स्थितवन्तः।

मध्यरात्रसमये ब्राह्मणपत्नी पुत्रं प्रसूतवती। शिशोः क्रन्दनशब्दः आरब्धः। तावता स्त्रीणाम् आर्तनादः अपि उद्गतः– "हा हन्त! शिशुः नीतः" इति। शिशोः



रोदनशब्दः आकाशे श्रूयते स्म।

अर्जुनः अन्ये योधाः च आकाशम् उद्दिश्य बाणान् प्रयुक्तवन्तः। किन्तु आकाशे तैः कोऽपि न दृष्टः। तेषां बाणैः कोऽपि न व्रणितः। कस्यापि आर्तनादः अपि न श्रुतः। एतत् दृष्ट्वा सर्वे आश्चर्येण स्तब्धाः।

सुमङ्गल्यः वृद्धाः च अर्जुनादीन् निन्दितवत्यः –"भवन्तः असमर्थाः। धिक् भवतः" इति।

ब्राह्मणः तु महता कोपेन अर्जुनसमीपम् आगत्य– "कृष्णस्य पुरतः वचसा महत् शौर्यं प्रदर्शयन् गर्वेण अत्र आगतवान् खलु भवान्? अत्र आगत्य किं वा साधितम्? एतत् कृष्णेन केवलं साधयितुं शक्यं, न अन्येन। एतत् अहं



पूर्वम् एव जानामि स्म। इतः परं कदापि एतादृशं गर्वं मा प्रदर्शयतु। रक्षणार्थम् आगतः भवान् रक्षणं न कृतवान्। अतः इदानीं प्रवृत्तायाः धर्महान्याः पादभागः भवन्तं बाधते। भवतः गाण्डीवं पराक्रमः च निरर्थकः जातः। इतः प्रतिगन्तुम् अर्हति भवान्" इति उक्तवान्।

एवम् उक्त्वा सः ब्रह्मणः ततः साक्षात् कृष्णस्य समीपं गतवान्। अर्जुनादयः अपि द्वारकां गतवन्तः।

लज्जया शिरः अवनमय्य स्थितम् अश्रुपूर्णनेत्रम् अर्जुनं दृष्ट्वा कृष्णः— "एतादृशे लघुविषये किमर्थं चिन्ता? अत्र कारणम् अन्यदेव अस्ति। अनन्तरकाले सर्वं वदिष्यामि" इति उक्त्वा दारुकम् आहूय रथं सज्जीकर्तुं सूचितवान्।

दारुकः शैब्य-सुग्रीव-मेघपुष्प-बलाहकनामकान् चतुरः अश्वान् योजयित्वा गरुडध्वजम् अपि योजयित्वा रथम् आनीतवान्। कृष्णः अर्जुनं सारथिस्थाने स्थातुं सूचितवान्। ब्राह्मणेन सह रथे उपविष्टवान् च। उत्तरदिशि प्रयाणम् आरब्धम्।

रथः अरण्यानि पर्वातान् नदीः च अतिक्रम्य समुद्रतीरं प्राप्नोत्। कृष्णः समुद्रं तीक्ष्णदृष्ट्या दृष्टवान्।

तदा समुद्रः प्रत्यक्षीभूय अर्घ्यं समर्प्य कृष्णं उक्तवान्— "महानुभाव! मया किं करणीयम् इति आदिशतु" इति।

"रथस्य गमनार्थम् अवकाशं कल्पयतु। तावता अलम्" इति उक्तवान् कृष्णः।

"देव! भवते मया अवकाशः दत्तः चेत् इतरे मां लघुतया पश्येयुः। मम अनुल्लङ्घनीयत्वं नश्यति। मां सृष्टवान् भवान् एव एवम् आदिशति चेत् अहं किं कुर्याम्?" इति पृष्टवान् समुद्रः।

"सर्वं जानामि अहम्। मन्निमित्तं, ब्राह्मणकार्यनिमित्तं च भवता एषः अवकाशः कल्पनीयः। मम गमनानन्तरं भवान् यथापूर्वं स्थातुम् अर्हति" इति उक्तवान् कृष्णः।

समुद्रः एतत् अङ्गीकृत्य कृष्णस्य गमनार्थम् अवकाशं दत्तवान्। कृष्णस्य रथः

समुद्रम् अतिक्रम्य उत्तरकुरुभूमिं चापि अतिक्रम्य गन्धमादनपर्वतम् उद्दिश्य अगच्छत्।

तत्र जयन्तः, वैजयन्तः, नीलः, श्वेतः, इन्द्रकूटः, कैलासः इत्येते पर्वताः विविधवर्णीयैः धातुभिः अलङ्कृताः सन्तः प्रत्यक्षीभूय– "देव! आदिशतु अस्मान्" इति उक्तवन्तः।

"मम रथस्य गमनार्थम् अवकाशं यच्छन्तु" इति उक्तवान् कृष्णः।

पर्वताः झटिति अपसृत्य कृष्णस्य गमनार्थं मार्गं कल्पितवन्तः।

मेघमध्ये सञ्चरन् सूर्यः इव कृष्णः पर्वतानां मध्ये बहुदूरं गतवान्। तदा अकस्मात् अन्धकारः व्याप्तः। अश्वाः भीत्या तत्रैव स्थितवन्तः। अर्जुनः अपि नितरां भीतः। तं घनान्धकारं कृष्णः स्वकीयेन चक्रेण विच्छिद्य "रथम् अग्रे नयतु" इति अर्जुनं सूचितवान्।

बहुदूरं गमनस्य अनन्तरं सुदूरे कश्चन तेजोराशिः दृष्टः। कृष्णः रथात् अवतीर्य तं तेजोराशिं प्रविष्टवान्।

'कोऽयं तेजोराशिः? अस्य अन्तः कृष्णः एकाकी कथं गतवान्? अग्रे किं भवेत्?' इति आलोचयति स्म अर्जुनः। तावता कृष्णः तेजोराशितः बहिः आगतवान्। तेन सह त्रयः ब्राह्मणकुमाराः अपि आसन्। कृष्णस्य हस्ते सद्योजातः शिशुः अपि आसीत्।

कृष्णः तं शिशुं तान् बालकान् च ब्राह्मणाय अर्पितवान्। पुत्राणां प्राप्त्या ब्राह्मणः नितरां सन्तुष्टः। एतत्सर्वं दृष्ट्वा अर्जुनः आश्चर्यचकितः जातः।

येन मार्गेण रथः गतः तेनैव मार्गेण प्रत्यागतः अपि। पर्वताः यथापूर्वम् अपसृत्य स्थितवन्तः। समुद्रः अपि मार्गं कल्पितवान्। रथस्य निर्गमनानन्तरं सः पूर्वतनस्थितिं प्राप्तवान्।

द्वारकां प्रत्यागतः कृष्णः उपायनैः ब्राह्मणं सत्कृत्य प्रेषितवान्। अनन्तरं यज्ञकार्यं समापितवान्।





# राकारिः

प्रसिद्धं पुलिन्दनामकं राज्यं पुरन्दरः नाम राजा पालयन् आसीत्। तस्य आस्थाने चत्वारः स्वार्थसाधकाः कपटपण्डिताः आसन्। ते केनापि व्याजेन महाराजतः पारितोषिकं प्राप्नुवन्तः सुखेन जीवनं यापयन्ति स्म।

एकदा ते चिन्तितवन्तः यत् महाराजतः कथञ्चित् सुवर्णं प्राप्तव्यम् इति। एतदनुगुणं ते एकाम् योजनाम् अपि कृतवन्तः।

कदाचित् राजसभा प्रचलन्ती आसीत्। तत्र उपस्थिताः एते पण्डिताः राजानम् उक्तवन्तः– "महाराज! गतरात्रौ वयं भवतः जन्मकुण्डलीं दृष्टवन्तः। इदानीं ग्रहाणाम् आनुकूल्यं नास्ति भवतः। सद्यः एव भवतः हस्तौ शक्तिहीनौ भवेताम्। नेत्रयोः दृष्टिशक्तिः अपि अपगन्तुम् अर्हति। अन्यानि अङ्गानि अपि शक्तिहीनानि भवेयुः" इति।

तदा दिग्भ्रान्तः राजा पृष्टवान्– "एतस्याः आपततः रक्षणार्थं कोऽपि उपायः न स्यात् वा?" इति।

"कुतो वा न स्यात् महाराज! एकस्मिन् शुभे शुक्रवासरे भवता सुवर्णमयः परशुः स्वीकरणीयः। तेन परशुना, हस्तः यावत् श्रान्तः न भवति तावत् वृक्षच्छेदनं करणीयम्। अनन्तरं स च परशुः उत्तमाय पण्डिताय कस्मैचित् दातव्यः। एतेन ग्रहाः अनुकूलाः भवन्ति। भवान् आपततः रक्षितः भविष्यति" इति सूचितवन्तः ते कपटपण्डिताः।

राजा तत्क्षणे एव सभां विसृत्य स्वर्णकारान् आहूतवान्। सुवर्णमयम् उत्तमं परशुं निर्मातुम् आदिष्टवान् च।

अनन्तरं राजा पण्डितैः सूचिते शुभे मुहूर्ते



मङ्गलवाद्यैः सह शोभायात्रया राजोद्यानं गतवान्।

तत्र सरोवरस्य पार्श्वे स्थितस्य वृक्षस्य काश्चन शाखाः शुष्काः आसन्। राजा तं वृक्षम् आरुह्य सुवर्णपरशुना शाखाच्छेदनं कर्तुम् आरब्धवान्। किन्तु अनभ्यासवशात् तस्य हस्तः श्रान्तः। हस्ते कम्पनम् उत्पन्नम्। कम्पनवशात् हस्तात् च्युतः सुवर्णपरशुः सरोवरे अपतत्।

तत्क्षणे एव केचन तरणनिपुणाः सरोवरम् अवतर्तुं सिद्धाः जाताः। तावता दूरस्थात् कमलपत्रसमूहात् कश्चन कृष्णवर्णीयः आकारः जलात् उद्गतः। स च आकारः स्वहस्ते स्थितम् अयोमयं परशुं तीरं प्रति अक्षिपत्।

तत्र सम्मिलिताः सर्वे एतं विचित्रम् आकारं दृष्ट्वा भीताः सन्तः– "कः भवान्?" इति उच्चैः पृष्टवन्तः।

तदा सः विचित्रः आकारः– "अहं राका...." इति कर्कशस्वरेण वदन् जले निमग्नः अभवत्।

सुवर्णमयं परशुम् अयोमयं कृतवतः तस्य राकानामकस्य सामर्थ्यं दृष्ट्वा सर्वे आश्चर्यचकिताः। अग्रे किं करणीयम् इति कोऽपि न जानाति।

महता विषादेन प्रत्यागतः राजा सभाम् आयोज्य उक्तवान्– "दिनद्वयाभ्यन्तरे तस्य राकानामकस्य मूलं ज्ञातव्यम् अस्माभिः। अन्यथा सः अस्माकं कोषे स्थितम् ऐश्वर्यम् अयोमयं कुर्यात्" इति।

दिनद्वयानन्तरं ते कपटपण्डिताः महाराजसमीपम् आगत्य उक्तवन्तः– "महाराज! अस्माभिः दिनद्वयं यावत् बहवः ग्रन्थाः परिशीलिताः। तद्दिने दृष्टः खलु, तस्य नाम राका इति न, अपि तु राकारिः इति। समुद्रमथनसन्दर्भे तस्य नाम पुराणेषु श्रूयते। त्रेतायुगे सः आसीत् इति ग्रन्थाः सूचयन्ति। सः प्रबलः कुतन्त्रनिपुणः महाक्रूरी राक्षसः" इति।

पण्डितानां वचनात् भीतः राजा विविधेभ्यः देशेभ्यः मान्त्रिकान् आनायितवान्। धनागारं परितः दुर्गं परितः च

विशेषतः रक्षणव्यवस्थाम् उपकल्पितवान्। सर्वत्र पूजाः कारिताः। प्रजाभ्यः तायकानि दत्तानि। यः राकारिं मारयितुं शक्नोति तस्मै अपूर्वं पारितोषिकं दीयते इति वार्ता देशे सर्वत्र सडिण्डिमघोषं प्रसारिता।

एतस्य अनन्तरदिने राजा भोजनानन्तरं विश्रान्तिसुखम् अनुभवन् आसीत्। तावता तत्र आगतः पाचकः महाराजम् उक्तवान्– "प्रभो! भवान् मद्विषये क्रुद्धः यदि न भवेत् तर्हि अहं राकारेः रहस्यं निवेदयामि" इति।

"राकारिविषये भवान् जानाति? तादृशस्य भयङ्करस्य राक्षसस्य रहस्यं भवान् कथं ज्ञातुं शक्तवान्?" इति आश्चर्येण पाचकं पृष्टवान् राजा।

"अस्माकं पाकशालायां रामनाथः नाम कर्मकरः अस्ति। तम् अत्र आनयामि। ततः भवान् सर्वम् अपि ज्ञास्यति" इति उक्त्वा गतः पाचकः रामनाथेन सह प्रत्यागतवान्।

रामनाथः राज्ञः पुरतः स्थित्वा भीत्या कम्पमानः नमस्कारपूर्वकं राजानं प्रार्थितवान्– "महाप्रभो! क्षन्तव्यः अहम्" इति।

तस्य आशयम् अजानन् राजा पृष्टवान्- "भवान् किमर्थं क्षन्तव्यः मया? भवता कः अपराधः कृतः?" इति।

रामनाथः भीत्या एव उक्तवान्– "अहम् एव सः राकारिः" इति।

तदा राजा कोपेन आश्चर्येण च पृष्टवान्–



"सुवर्णपरशुम् अयोमयं कृतवान् सः भयङ्करः भवान् एव? भवतः बुद्धिः भ्रष्टा तु न खलु?" इति।

तदा पाचकः अग्रे आगत्य महाराजम् उक्तवान्– "प्रभो! मया उच्यमानं सर्वं सावधानं शृणोतु। तदा भवता सर्वं सुस्पष्टं ज्ञायते।

तद्दिने एषः रामनाथः पाकशालां स्वच्छीकृत्य स्नानार्थं प्रस्थितः आसीत्। अहं तम् आहूय उक्तवान्–"अये रामनाथ! एतानि काष्ठानि न शुष्काणि। महाराजार्थं पाकः तु समये सिद्धः भवेत्। अतः भवान् उद्यानं गत्वा कानिचन शुष्काणि काष्ठानि आनयतु" इति।

रामनाथस्य शरीरम् अङ्गारादिभिः

कृताभिः रेखाभिः कृष्णवर्णीयं दृश्यते स्म। सः तेनैव रूपेण परशुम् एकं स्वीकृत्य उद्यानं गतवान्। सरोवरतीरे स्थिते वृक्षे शुष्काः शाखाः दृष्ट्वा सः तं वृक्षम् आरुह्य शाखाच्छेदनं कर्तुम् उद्युक्तः। तावता मङ्गलवाद्यैः सह भवान् तत्र आगतवान्। दूरात् एव भवतः आगमनं दृष्ट्वा दण्डनात् भीतः एषः रामनाथः सरोवरं प्रविष्टवान्। तरणप्रवीणः एषः कमलपत्राणां मध्ये आत्मानं निगूह्य स्थितवान्।

वृक्षच्छेदनं कुर्वतः भवतः हस्तात् तावता सुवर्णपरशुः सरोवरे पतितः। तरणचतुराः सरोवरम् अवतर्तुं सिद्धाः। 'इदानीं मदीयं रहस्यं प्रकटितं भवति' इति आलोच्य रामनाथः परशुस्थं मश्यंशं मुखे लेपयन्, पङ्केन आत्मानं सम्यक् विलिप्य 'मम अभिज्ञानं कोऽपि प्राप्तुं न शक्नुयात्' इति निश्चित्य जलात् उत्थाय अयोमयं परशुं तीरं प्रति क्षिप्तवान्। भवान् यदा नाम पृष्टवान् तदा सः आत्मनः परिचयं वक्तुं भीत्या अशक्नुवन् 'राका....' इति अस्पष्टं किमपि उक्त्वा जले मज्जनं कृतवान्। तरणचतुरः एषः अन्यत् तीरं प्राप्य ततः स्वस्थानं गतवान्। सुवर्णपरशुविषये चिन्तयन्तः भवन्तः तस्य गमनं न लक्षितवन्तः। एषा वस्तुस्थितिः'' इति।

एतत्सर्वं श्रुत्वा उच्चैः हसित्वा राजा उक्तवान्– ''अहो! राकारेः राक्षसस्य मूलम् इदानीं सम्यक् ज्ञातम्। एवं तर्हि सुवर्णपरशुः केनापि न नीतः। सः इदानीम् अपि सरोवरे एव अस्ति। अद्यैव तस्य अन्वेषणं कारणीयम्'' इति।

''अन्वेषणस्य आवश्यकता नास्ति। तद्दिने रात्रौ रामनाथः गोप्यतया सरोवरं प्रविश्य सुवर्णपरशुम् आनीतवान्। मम हस्ते दत्तवान् च'' इति उक्त्वा पाचकः पाकशालां गत्वा सुवर्णपरशुम् आनीय दत्तवान्।

राजा स्वकण्ठे स्थितं रत्नहारं रामनाथाय दत्तवान्। तान् कपटपण्डितान् कठोरं दण्डितवान् चापि।





# मीनाण्डेभ्यः अङ्कुरः

कैरोनगरे पूर्वं गोहः नाम कश्चन विदूषकः आसीत्। कदाचित् सः उद्यानविषये आसक्तः जातः। अतः सः गृहं परितः स्थितां भूमिं सम्यक् कृष्ट्वा तत्र विविधानि पुष्पसस्यानि आरोपितवान्। अनन्तरं गोभरं स्थापयन् आलवालं निर्माय प्रतिदिनं जलसेचनं कृतवान्। अतः अल्पे एव काले गोहस्य गृहं परितः सुन्दरम् उद्यानं निर्मितम् अभवत्।

एकदा कस्यापि कार्यस्य निमित्तं कश्चन धनिकः गोहस्य गृहम् आगतवान्। तत्समये गोहः उद्यानकार्ये मग्नः आसीत्। तं दृष्ट्वा सः धनिकः उक्तवान्– "भवान् उद्यानपालकः संवृत्तः इति मया यत् श्रुतं तत् सत्यम् एव इति इदानीं ज्ञातम्। किन्तु भवतः उद्याने नवजातीयकं सस्यम् एकम् अपि न दृश्यते खलु?" इति।

"यत् बीजं लब्धं तत् भूमौ स्थापितं मया। अतः अत्र नवजातीयकानि सस्यानि न दृश्यन्ते" इति उत्तरं दत्तवान् गोहः।

"यदि भवान् इच्छति तर्हि अहम् अपूर्वाणि बीजानि दातुं सिद्धः। किन्तु भवान् ततः अङ्कुरम् उत्पादयितुं शक्नुयात् वा न वा इति मम सन्देहः" इति उक्तवान् धनिकः।

"तादृशः सन्देहः मास्तु भवतः। बीजं यादृशं वा भवतु, ततः अङ्कुरम् उत्पादयामि अहम्" इति उक्तवान् गोहः।

"तर्हि श्वः प्रातः सेवकद्वारा तानि अपूर्वबीजानि प्रेषयिष्यामि" इति उक्त्वा ततः गतवान् धनिकः।

अनन्तरदिने धनिकस्य सेवकः आगत्य गोहाय कानिचन बीजानि दत्त्वा उक्तवान्– "एतानि मम यजमानेन प्रेषितानि। एतेभ्यः जागरूकतया अङ्कुराः उत्पादनीयाः इति तेन सूचितम् अस्ति" इति।

"मिस्रदेशीया जानपदकथा"



"किंजातीयकानि बीजानि एतानि?" इति पृष्टवान् गोहः।

"तेन तद्विषये किमपि न उक्तम्। यदा अङ्कुराः उत्पद्यन्ते तदा सः स्वयम् आगत्य द्रष्टुम् इच्छति" इति उक्तवान् सेवकः।

उद्यानपालकाः प्राप्तं बीजं दन्तैः दष्ट्वा तस्य जातिं स्वरूपं च प्रायः जानन्ति। गोहः अपि तथैव कृतवान्। एतेन तेन ज्ञातं यत् धनिकः वञ्चितवान् इति।

धनिकेन यानि प्रेषितानि तानि वस्तुतः सस्यबीजानि न, अपि तु शुष्काणि मीनस्य अण्डानि। उपहासार्थं सः तानि मीनाण्डानि प्रेषितवान् आसीत्। एतत् दृष्ट्वा गोहः निश्चितवान् यत् योग्येन उपायेन धनिकः अपि वञ्चनीयः इति।

सप्ताहद्वयम् अतीतम्। विपण्यां गच्छन् गोहः अकस्मात् धनिकं दृष्टवान्। धनिकः गोहं पृष्टवान्– "किं भोः, भवतः पुष्पसस्यानि कथं सन्ति?" इति।

"देवकृपया सस्ये पत्राणि एव न दृश्यन्ते, केवलं पुष्पाणि एव" इति उक्तवान् गोहः।

"भोः, मया प्रेषितानि बीजानि भूमौ स्थापितवान् वा?" इति पृष्टवान् धनिकः।

"आम्। तद्दिने एव तानि भूमौ स्थापितानि" इति उत्तरं दत्तवान् गोहः।

धनिकः उद्गच्छन्तं हासं निगृह्णन् उक्तवान्– "किन्तु ततः अङ्कुराः उत्पन्नाः न स्युः खलु? यतः मम जामाता पूर्वम् एव उक्तवान् आसीत् यत् सामान्येन उद्यानपालकेन ततः अङ्कुरोत्पादनम् असाध्यम् इति" इति।

"मां किं सामान्यं मन्यते वा भवान्? योग्यम् आलवालं निर्माय योग्येन प्रमाणेन गोभरं योजयित्वा जागरूकतया जलसेचनं कृतं चेत् अङ्कुरोत्पत्तिः सुनिश्चिता। भवता प्रेषितेभ्यः बीजेभ्यः अपि अङ्कुराः उत्पन्नाः एव। अङ्कुराः न नश्येयुः इति उद्देशेन एकैकम् अपि आवरणेन आच्छादितवान् अस्मि। श्वः प्रातः आगत्य भवान् स्वयं द्रष्टुम् अर्हति" इति साभिमानम् उक्तवान् गोहः।

एतत् श्रुत्वा अन्तरङ्गे आश्चर्यम् अनुभवन् धनिकः– "अस्तु, श्वः

आगमिष्यामि" इति उक्त्वा स्वगृहं गतवान्।

गोहः ततः मीनापणं गत्वा कांश्चन मीनान् क्रीत्वा गृहं गतवान्। कनिष्ठं पुत्रम् आहूय उक्तवान्— "वत्स! एतेषां मुखभागः केवलं बहिः यथा दृश्येत तथा एतान् मीनान् भूमौ स्थापयतु। परितः आलवालं निर्माय एकैकस्य उपरि अपि पृथक् आवरणं किमपि स्थापयतु" इति। पुत्रः तथैव कृतवान्।

अनन्तरदिने प्रातः धनिकः गोहस्य गृहम् आगतवान्। तं गृहस्य पृष्ठतः नीत्वा आलवालं प्रदर्शयन् गोहः— "अङ्कुरितानि सस्यानि आवणानाम् अधः सन्ति" इति वदन् एकम् आवरणम् अपसारितवान्। तत्र अङ्कुरः इव दृश्यमानः एकः मीनः दृष्टः। गोहः एकैकशः आवरणम् अपसारितवान्। तत्र सर्वत्र अङ्कुराः इव दृश्यमानाः मीनाः आसन्।

एतत् दृष्ट्वा अतीव आश्चर्यचकितः धनिकः उक्तवान्— "अहो आश्चर्यम्! अपूर्वं दृश्यम् एतत्! विपण्यां भवान् यत् उक्तवान् तत्र विश्वासः न उत्पन्नः मम। किन्तु इदानीं प्रत्यक्षं पश्यामि खलु? अतः विश्वसनीयम् एव" इति।

"एतेभ्यः बीजेभ्यः अङ्कुराणाम् उत्पादनं न महते क्लेशाय। मम समीपे यदि दश-एकरमिता भूमिः स्यात् तर्हि तत्र एतानि एव वर्धयेयम्" इति उक्तवान् गोहः।

"तत् कार्यम् अहं करोमि" इति उक्त्वा गृहं गतः धनिकः कर्मकरान् आहूय उक्तवान्— "एतस्मिन् वर्षे भवन्तः मीनाण्डानि आनीय मम क्षेत्रेषु आरोपयन्तु। अन्यत् किमपि न आरोपणीयम्" इति। कर्मकराः यजमानस्य आदेशं श्रद्धया पालितवन्तः।

एषा वार्ता ग्रामे सर्वत्र प्रसृता। ग्रामस्थाः सर्वे धनिकं दृष्ट्वा उपहासं कृतवन्तः। अल्पेषु एव दिनेषु आत्मना आचरिता मूर्खता धनिकेन ज्ञाता एव। 'गोहस्य उपहासार्थं यत् कृतं तत् ममैव हानये अभवत्' इति खेदम् अनुभूतवान् धनिकः।






# अद्वितीयः वीरः

मलयतीरे पूर्वं स्वतन्त्रः अद्वितीयः कश्चन वीरः निवसति स्मः। तस्य साहस-पराक्रमादयः बुद्धिमत्ता च देशविदेशेषु प्रसिद्धाः आसन्। तद्विषये बह्वयः कथाः अपि श्रूयन्ते स्म।

एकदा सः वीरः समुद्रतीरे विहरन् आसीत्। तत्समये कश्चित् महाकायः समुद्रजलस्य उपरि सञ्चरन् तीरम् आगतवान्।

तीरम् आगतं तं पृष्टवान् वीरः– "भोः, कः भवान्? कुतः आगतवान्? कस्य कार्यस्य निमित्तं कुत्र प्रस्थितवान्?" इति।

तदा सः महाकायः उक्तवान्– "अहं महाकायद्वीपात् आगच्छन् अस्मि। अत्र कश्चन अद्वितीयः वीरः अस्ति इति श्रूयते। सः द्रष्टव्यः मया। अस्माकं राज्ञा तस्मै कश्चन सन्देशः प्रेषितः अस्ति" इति।

"सः वीरः इदानीं मृगयार्थम् अरण्यं गतवान् अस्ति। अहं तस्य मित्रम्। भवान् भवतः राज्ञः सन्देशं मां वदतु। अहं मम मित्रं सूचयिष्यामि" इति उक्तवान् वीरः।

"अस्माकं महाराज्ञी आसन्नप्रसवा। तया इतः पूर्वं पुत्रद्वयं प्रसूतम्। किन्तु तत् द्वयम् अपि अज्ञातया कयाचित् व्यक्त्या सूतिकागृहतः एव अपहृतम्। एतत्सन्दर्भे जायमानस्य अपत्यस्य रक्षणार्थं राजा अद्वितीयवीरस्य साहाय्यम् अपेक्षते। इतः पूर्वं यदा पुत्रः उत्पन्नः तदा सर्वत्र प्रबला रक्षणव्यवस्था उपकल्पिता आसीत्। तथापि चौर्यं प्रवृत्तम्। चोरः कुतः आगतः, कथं चौर्यं कृतवान् इत्यादिकं सर्वथा न ज्ञायते। अतः एव अद्वितीयस्य वीरस्य साहाय्यं प्रार्थितं महाराजेन" इति उक्तवान् महाकायः।

"अस्तु तावत्। भवता उक्तं विषयं तं वीरं निवेदयिष्यामि। सः अवश्यं साहाय्यार्थम्

आगमिष्यति इति राजानं वदतु भवान्'' इति उक्तवान् वीरः।

महाकायः वीरस्य अनुज्ञां प्राप्य यथा आगतं तथैव समुद्रजलस्य उपरि पदं स्थापयन् प्रतिगतवान्।

अनन्तरदिने प्रातः सः वीरः समुद्रतीरे सञ्चरन् आसीत्। तदा क्रीडायां मग्नाः अष्ट वामनाः तेन दृष्टाः।



वीरः तेषां समीपं गत्वा पृष्टवान्– ''के भवन्तः? अत्र किं कुर्वन्ति? कुतः आगताः?'' इति।

''वयं वामनपुरुषाः। अस्मासु एकैकस्य एकैकं विशिष्टं सामर्थ्यम्। मम नाम शिलारामः इति। अहं यदि उपविशामि तर्हि माम् उत्थापयितुं किं, कम्पयितुम् अपि कोऽपि न शक्नोति'' इति उक्तवान् तेषु अन्यतमः वामनः।

''पश्यामि, उपविशतु तावत्'' इति उक्तवान् वीरः।

शिलारामः भूमौ उपविष्टवान्। वीरः तम् उत्थापयितुं बहुधा प्रयत्नं कृतवान्। किन्तु कम्पयितुम् अपि न शक्तवान् सः। आश्चर्यम् अनुभवन् सः इतरेषां सामर्थ्यविषये पृष्टवान्।

तेषु अपरः दिव्यकर्णः। सः समुद्रस्य अपरस्मिन् तीरे प्रचलन्तं वार्तालापम् अपि श्रोतुं शक्नोति।

तृतीयः दूरदर्शी। एषः समुद्रस्य अपरतीरे स्थितां पिपीलिकाम् अपि द्रष्टुं शक्नोति।

चतुर्थः महाज्ञानी। जगति यद्यत् प्रचलति तत्सर्वं सः दिव्यदृष्ट्या क्षणमात्रेण जानाति।

पञ्चमः लहुहस्ती। सः कुक्कुट्याः अधः स्थितम् अण्डं कुक्कुटी यथा न जानीयात् तथा आनेतुम् अपि समर्थः।

षष्ठः आरोही। मक्षिकया आरोढुम् अशक्तं स्थलम् अपि सः लीलया गच्छति।

सप्तमः धनुर्वीरः। आकाशे शताधिकसङ्ख्यया उड्डयमानासु मक्षिकासु निर्दिष्टायाः कस्याश्चित् उपरि सः बाणप्रयोगं कर्तुं शक्नोति।

अष्टमः अस्ति दारुब्रह्मा। प्राप्तेन अल्पेन अपि काष्ठेन सः क्षणमात्रेण अपेक्षितं



"अवश्यं कुर्मः। परोपकारः एव अस्माकं वृत्तिः" इति वदन्तः ते अष्ट वामनाः अपि नौकाम् आरूढवन्तः।

तैः सह प्रयाणं कुर्वन् वीरः महाकायद्वीपं प्राप्तवान्।

महाकायद्वीपस्य राजा अद्वितीयं वीरं तस्य सहचरान् च परमादरेण स्वागतीकृत्य उक्तवान्– "मित्र! समये उपस्थितः भवान्। मम पत्नी इदमिदानीं प्रसूतवती। इतः पूर्वं मम पुत्रद्वयम् अपि जन्मदिने एव केनापि चोरितम्। अतः अहं चिन्तयामि – अद्य रात्रौ एवं आपत् आपतेत् इति। भवतः आगमनेन मम धैर्यम् आगतम्। भवान् एव शरणं मम" इति।

"भवतः किञ्चिदपि भीतिः मास्तु। अद्य रात्रौ अहं मम सहचराः च भवतः पुत्रं जागरूकतया रक्षामः। मम वचने विश्वसितु। यति अहं रक्षणं कर्तुं न शक्नोमि तर्हि मम शिरश्छेदं कर्तुम् अर्हति भवान्" इति दृढस्वरेण उक्तवान् वीरः।

अयोमये पेटिकासदृशे सूतिकागृहे दासीभ्यां सह तिष्ठति महाराज्ञी। तत् सूतिकागृहं परितः वीरः ते वामनाः च रक्षणार्थं स्थितवन्तः।

महाज्ञानी वीरम् उक्तवान्– "भवता राज्ञः पुरतः उक्तं यत् शिशोः रक्षणं कर्तुं न शक्तं चेत् मम शिरश्च्छेदं कर्तुम् अर्हति भवान् इति। एतत् तु अनुचितं जातम्। यतः

दारुशिल्पं कर्तुं शक्नोति।

"अपूर्वं सामर्थ्यं भवताम्! दारुब्रह्मन्! नौकायाः निर्माणार्थं कियान् कालः अपेक्षितः भवते?" इति पृष्टवान् वीरः।

"भवान् अत्र स्थितः एव एकवारं परिक्रमणं करोतु। तावता सिध्यति" इति उक्तवान् दारुब्रह्मा।

वीरः वेगेन एकं परिक्रमणं कृतवान्। तावता दारुब्रह्मा काष्ठखण्डम् एकं स्वीकृत्य चालितवान्। क्षणाभ्यन्तरे समुद्रे महानौका एका सिद्धा आसीत्।

"अहम् एतया नौकया महाकायद्वीपं गन्तुम् इच्छामि। भवन्तः अपि मया सह आगत्य मम साहाय्यं कर्तुं शक्नुवन्ति वा?" इति पृष्टवान् वीरः।

अद्य शिशोः चौर्यं भविष्यति एव। तं शिशुं रक्षितुं वयं न शक्नुमः'' इति।

''एवं वा? अस्तु तावत्। शिशुं कः अपहरिष्यति इति भवान् ज्ञातुं शक्नोति वा?'' इति पृष्टवान् वीरः।

''राज्ञः भगिनी एव चौर्यं करिष्यति। राज्ञः पुत्रद्वयम् अपि इतः पूर्वं तया एव अपहृतम्। भ्रातृभगिन्योः महान् विरोधः अस्ति। सा मान्त्रिकविद्यां जानाति। अदृश्यरूपेण दुर्गं प्रविश्य सा प्रकोष्ठस्य धूमनाड्यां हस्तं प्रसार्य शिशुम् अपहरिष्यति'' इति उक्तवान् महाज्ञानी।

''सा हस्तम् अन्तः प्रवेशयति चेत् बहिः नेतुं न शक्नोति। यतः प्रवेशसमनन्तरम् एव तस्याः हस्तस्य उपरि अहम् उपविशामि'' इति उक्तवान् शिलारामः। सः धूमनाड्याः पार्श्वे एव उपविष्टवान् चापि।

सर्वे वामनाः स्वस्थाने उपविष्टवन्तः। मध्यरात्रसमये दिव्यकर्णः सूचितवान्– ''महाकायराजस्य भगिनी स्वस्य दुर्गे स्थितान् सूचयन्ती अस्ति यत् इतः पूर्वं चौर्येण आनीतौ बालौ अद्य जागरूकतया रक्षणीयौ इति'' इति।

तदा दूरदर्शी उक्तवान्– ''सा छदिम् अतिक्रम्य आगच्छन्ती अस्ति। तस्याः गृहस्य न वातायनानि, न वा द्वाराणि। तस्याः दुर्गस्य भित्तिः तु काचकम् इव मसृणम्'' इति।

किञ्चित्कालानन्तरं दिव्यकर्णः



उक्तवान्– ''सा दुर्गरक्षकान् वञ्चयित्वा अन्तः आगतवती'' इति।

ततः द्वित्रेषु क्षणेषु धूमनाडीमार्गेण एकः कृष्णवर्णीयः हस्तः अधः आगतः। शिलारामः झटिति तं हस्तं बलात् आकृष्य तस्य उपरि उपविष्टवान्। घोरं तं हस्तं दृष्ट्वा सर्वे आश्चर्यम् अनुभवन्तः हस्तं परितः स्थितवन्तः। तावता सा राक्षसी अपरं हस्तं प्रसार्य शिशुम् उन्नीय बहिः नीतवती। ''शिशुः गतः'' इति आक्रोशनं कृतवत्यः दास्यः। एतावता दिग्भ्रान्तस्य शिलारामस्य ग्रहणात् तस्याः हस्तः कथम् अपि च्युतः अभवत्।

तदा भीताः वामनाः उक्तवन्तः– ''वयं

नौकाम् आरुह्य पलायनं करवाम। अन्यथा राजा अस्माकं सर्वेषां शिरश्च्छेदं कुर्यात्" इति।

"किमर्थं पलायनम्? राजा शिरश्च्छेदनं कुर्यात् चेदपि मम एकस्यैव कुर्यात्। तदस्तु, राक्षस्याः अनुसरणं कृत्वा अस्माभिः महाराजस्य त्रयः पुत्राः अपि कुतो वा न प्रत्यानेतव्याः?" इति पृष्टवान् वीरः।

सर्वे दुर्गम् अतिक्रम्य गत्वा नौकाम् आरुह्य राक्षस्याः दुर्गसमीपं गतवन्तः। आरोही लघुहस्तिनं स्वस्य स्कन्धस्य उपरि उपवेश्य दुर्गभित्तिम् आरुह्य दुर्गस्य अन्तः अवतारितवान्। लघुहस्ती महाराजस्य त्रीन् पुत्रान् अपि एकैकशः आनीय आरोहिणः हस्ते दत्तवान्। तैः पुत्रैः सह सर्वे नौकायाम् उपविष्टवन्तः। अनन्तरं महाकायद्वीपं प्रति प्रयाणम् आरब्धम्।

आत्मना अपहृत्य आनीताः पुत्राः दुर्गे न दृश्यन्ते इति ज्ञात्वा दिग्भ्रान्ता राक्षसी दुर्गात् निर्गतवती। नौकाम् अनुसृत्य आगतवती च। दूरदर्शी तस्याः आगमनं प्रतिक्षणं निवेदयन् आसीत्। "सर्वे जागरूकतया तिष्ठन्तु। सा राक्षसी नौकासमीपम् आगच्छन्ती अस्ति। सा किं कुर्यात् इति वक्तुं न शक्यते" इति उक्तवान् दूरदर्शी।

"मयि विद्यमाने, भीतिः किमर्थं भवताम्?" इति सगर्वम् उक्तवान् धनुर्वीरः।

वेगेन आगच्छन्ती सा यदा समीपम् आगता तदा धनुर्वीरः तस्याः नेत्रम् उद्दिश्य बाणप्रयोगं कृतवान्। एतेन तीव्रं व्रणिता सा समुद्रे पतितवती, प्राणान् अत्यजत् च।

प्रातःकाले महाराजः महता आतङ्केन प्रसूतिकागृहम् आगतवान्। तावता तत्र तदीयाः त्रयः पुत्राः अपि उपस्थिताः आसन्। एतत् दृष्ट्वा आश्चर्येण स्तब्धः सः क्षणकालानन्तरं पुत्रान् प्रीत्या आलिङ्ग्य अद्वितीयवीरम् अपि प्रीत्या आलिङ्गितवान्। सप्ताहं यावत् तेषां सर्वेषाम् आतिथ्यं कृतवान् राजा। अनन्तरं विविधैः उपायनैः तान् सर्वान् सत्कृत्य कृतज्ञतापूर्वकं प्रेषितवान्।




सौचिकः पक्षी
स्वस्य नीडस्य निर्माणार्थं पर्णद्वयं योजयित्वा सौचिकः इव सीवनं करोति इत्यतः एतं पक्षिणं सौचिकपक्षी इति नाम्ना आह्वयन्ति। एषः पक्षी पर्णस्य प्रान्तभागे पङ्क्तिरूपेण रन्ध्राणि करोति। ततः कृशेन तन्तुना सीवयन् पर्णद्वयं योजयति। पर्णयोः मध्ये कोमलानि तृणानि पल्लवानि च स्थापयन् रमणीयं नीडं रचयति।


सर्वोच्चः जलप्रपातः
वेनिगुलास्थः ३,२१२ द्वादशाङ्गुलोन्नतः एन्जल्जलप्रपातः एव सर्वोच्चः। १९३४ तमे वत्सरे एषः प्रपातः प्राकाश्यतां गतः।


ध्वन्युत्पादकः 'डाल्फिन्'मीनः
डाल्फिन्मीनाः मानवस्य अपेक्षया अपि दशगुणितम् उच्चैः ध्वनिम् उत्पादयन्ति।

# यानप्रतीक्षणम्

| | |
|---|---|
| I – हन्त! अत्र न स्थितम् एव एतत् यानम्। | Eh, the bus never stopped here! |
| II – किं श्रीमन्! विजयनगरं गन्तव्यं वा भवता? | Sir, have you to go to Vijayanagar? |
| I – आम्! अर्धघण्टातः प्रतीक्षमाणः अस्मि। एकम् अपि यानं न लब्धम्। | Yes, I have been waiting for half an hour. Couldn't get a single bus. |
| II – एतस्मिन् समये सर्वदा एवम् एव। यानप्राप्तिः सर्वथा असाध्या। | It is always like that at this hour. Very difficult to get buses! |
| I – पश्यतः मम यानत्रयं गतम्। एकं यानम् अग्रे गत्वा स्थितम्। यावत् अहम् इतः धावितवान् तावता तत् निर्गतम्। पुनः यानद्वयम् अत्र न स्थितम् एव। | I have seen three buses pass by. One stopped. Quite away from here. I ran up but it sped away. Two others didn't stophere at all. |
| II – याने विश्वस्य वयं कदापि कुत्रापि समये गन्तुं न शक्नुमः। समये गन्तव्यं चेत् स्वकीयं यानं भवेत्। अन्यथा त्रिचक्रिका आश्रयणीया। | We can never reach a place in time if we depend on these buses. We must have either a vehicle of our own or depend on Autos. |
| I – अद्य मम त्रिचक्रिका एव शरणम्। यतः एतावता एव विलम्बः जातः। भवान् कुत्र गन्तुम् उद्युक्तः? | I have got to be at the mercy of an Auto today. It is already very late. Where have you to go? |
| II – अहम् अपि विजयनगरम् एव गन्तुम् इच्छुः। | I too have to go to Vijayanagar. |
| I – तर्हि त्रिचक्रिकया गच्छाव वा? | Shall we take an Auto then? |
| II – अस्तु तावत्। यानप्रतीक्षणेन वृथा समयव्ययः, तावदेव। | By all means. Waiting for the bus is just a waste of time, that is all. |



# चित्रंशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां सप्टम्बर् -८९ मासे प्रकटयिष्यामः।





* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'मे'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **न शोभते निस्सज्जनः सौधः समुन्नतोऽपि।**

द्वितीयचित्रम् - **नैव वर्धते निस्सभास्तारा सभा सविस्तारापि।।**

प्रेषकः - श्री कृ. रङ्गस्वामी, ४७, मा. नगरम्, अण्णामलैनगरम्-६०८००२




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अग्नितैलम् - | Petrol | तिन्त्रिणी - | Tamarind |
| अन्तःपेटिका | Drawer | धूमनाडी - | Chimney |
| अपत्यम् - | Child | निर्वाचनम् - | Election |
| अर्धोरुकम् - | Knicker | परशुः - | Axe |
| आढकी - | Toor dhall | पलाण्डुः - | Onion |
| आलवालः - | The trench dug round the foot of a tree | पाचिका - | Cook (Woman) |
| | | पिच्छम् - | Feather |
| | | मसृणम् - | Smoothness |
| उत्पीठिका - | Table | लाघवम् - | Lightness |
| उपधानम् - | Pillow | वाटिका - | Garden |
| उपनेत्रम् - | Spectacles | विद्रावयति - | Melts |
| उष्णीषम् - | Turban | वेष्टी - | Dhoti |
| औद्धत्यम् - | Arrogance | शूर्पः - | Winnowing fan |
| काचकम् - | Glass | शोभायात्रा - | Procession |
| कुञ्चिका - | Key | श्मश्रु - | Moustache |
| कूपिका - | Bottle | सुधाखण्डः - | Peice of chalk |
| कृष्ट्वा - | Having ploughed | सूतिकागृहम् - | Delivery ward |
| खल्वाटता - | Boldness | सौचिकः - | Tailor |
| गीर्णः - | Was swallowed | स्थालिका - | Plate |
| गोभरः - | Manure | स्थाली - | A vessel for cooking |
| जानुग्रन्थिः - | Knee | | |
| तायकम् - | Talisman | * * * | * * * |

